बालकस्य आहारे
दाली आवश्यका
इति सर्वाः मातरः जानन्ति।

# फॅरेक्स व्हेज
# एव दालीगुणयुक्तम्



धान्यं-मुद्गदाली-टोमॅटो-
गाजर इत्यादिभिर्युक्तं
रुचिकरं फॅरेक्स व्हेज
प्रथिनप्रचुरं
पचनसुलभं च।




दाली-
युक्तम्

## फॅरेक्स-व्हेज
रुचिरं संवर्धनसाधनम्

कुत्राऽपि पण्यां एकमात्रेण न्यूनतममूल्येन प्राप्यम्।

Gx.223.90SnR

कविहृदयम्–

# यत्ने भवतु श्रद्धा

यत्ने कृते यदि न सिध्यति कोऽत्र दोषः
को वा न सिध्यति ममेति करोति कार्यम्।
यत्नैः शुभैः पुरुषता भवतीह नृणां
दैवं विधानमनुगच्छति कार्यसिद्धिः॥

– भासकविः (अवि-III-१२)

"लोके सर्वेऽपि किमपि फलम् उद्दिश्य प्रयत्नपराः भवन्ति। कार्यारम्भसमये न कोऽपि कदापि चिन्तयति यत् एतत् कार्यं मम न सिध्यति इति। एतत् सिध्यति एव इति निश्चयभावनया एव सः कार्यप्रवृत्तः भवति। किन्तु कदाचित् कार्यानुगुणं फलं न प्राप्यते। अनुगुणं फलं यत्र न प्राप्यते तत्र कर्तुः एव दोषः इति नास्ति। कदाचित् कर्तुः कोऽपि दोषः न भवति। तथापि अनुगुणं फलं न प्राप्यते। अत्र कारणं दैवम्। कार्यसिद्धिः सदापि दैवाधीनम्। तर्हि फलं न प्राप्तं चेत् कृतः यत्नः विफलः जातः खलु इति चेत् न। अस्माभिः यः यत्नः कृतः, तेन आत्मनः सार्थकता तु सिध्यति एव।

यत्नसमाप्तिसमनन्तरम् एव फलं न दृष्टं चेत् यत्नः व्यर्थः इति कदापि नास्ति। फलं कदाचित् कालान्तरे सिध्येत्। कदाचित् देशान्तरे अपि सिध्येत्। अतः कृतः यत्नः विफलः इति कदापि नास्ति।

'मार्गारब्धाः सर्वयत्नाः फलन्ति' इति वदति सुभाषितकारः। कार्यस्य असिद्धिं दृष्ट्वा वयं कदाचित् चिन्तयामः– 'अहो, कार्यम् एव न सिद्धम्!' इति। 'आत्मनः दोषः अपि अत्र स्यात् वा?' इति न चिन्तयामः एव। योग्येन मार्गेण अप्रवर्तनं, पर्याप्तमात्रेण प्रयत्नस्य अकरणम् इत्यादयः एव प्रायः अस्मदादीनां जीवने कार्यस्य असिद्धेः हेतवः भवन्ति। विशिष्टेषु सन्दर्भेषु केषुचित् दैवम् अपि कारणं स्यात् नाम।

फलं सिध्यतु वा मा वा, कोऽपि प्रयत्नः निष्फलः तु न। प्रयत्नकरणेन अनुभवः वर्धते एव। पुरुषार्थस्य सार्थकता अपि अस्ति। अतः फलविषये अधिकचिन्तनम् अकृत्वा प्रयत्नांशे अधिकम् अवधानं स्थापनीयम्।




लॉज़ ऑफ़ दि जंगल गेम

स्नैप सफ़ारी गेम






# मैगी क्लब: आओ मनाएं जंगल में मंगल!

## अपने उपहार मुफ़्त लो!

मैगी नूडल्स के 5 खाली रैपरों के आगे वाले हिस्से से यह चिन्ह काटो और अपनी पसंद के मुफ़्त उपहार पाने के लिए हमें भेज दो. 6 से 8 हफ़्तों में तुम्हें मैगी क्लब की ओर से एक रोचक व आकर्षक उपहार मिल जाएगा.

यह मत भूलो :

अगर तुम मैगी क्लब के सदस्य नहीं हो तो हमें लिखते समय अपने मनचाहे उपहार के नाम के साथ अपना नाम और पता ज़रूर लिखना. और यदि तुम पहले से मैगी क्लब के सदस्य हो तो अपना मेम्बरशिप नम्बर भी साथ भेजना.

डिज़्नी टुडे कॉमिक



फ़ॉरेस्ट फ़ेसिज़ कैप और मास्क

जंगल स्टैन्डीज़ सेट




हमारा पता है : दि मैगी क्लब
पी.ओ. नं. : 5788, नई दिल्ली-110055

और यही नहीं : अगर तुमने अभी तक 'ट्रैवल इंडिया गेम' नहीं लिया है तो आज ही लो!

HTA 6679 HIN



# चन्दमामा

सप्टम्बर्-१९९०

*

## अन्तरङ्गम्


| | | | |
|---|---|---|---|
| सम्पादकीयम् | .... ७ | रामकृष्णपरमहंसः—२ | .... ३७ |
| वार्ताविशेषः | .... ९ | चोरग्रहणम् | .... ४१ |
| ताम्रकङ्कणम् | .... ११ | वीरः हनूमान् | .... ४५ |
| लुण्ठाकः युवराजः | .... १७ | वरप्रियाविवाहः | .... ५३ |
| कर्णेजपे विश्वासः | .... २४ | महाराजस्य मार्जारः | .... ५८ |
| स्वप्नसुन्दरी | .... २५ | युक्तिः प्रतियुक्तिः च | .... ६१ |
| अपराधान्वेषणम् | .... ३० | प्रकृतिवैचित्र्याणि | .... ६३ |
| चन्दमामानुबन्धः—२१ | .... ३३ | चित्रशीर्षिकास्पर्धा | .... ६५ |


*


प्रतिकृतिमूल्यं रू. ३-००

वार्षिकं ग्राहकशुल्कं रू. ३६-००

# चन्दमामा

संस्थापकः– 'चक्रपाणिः' सञ्चालकः– 'नागिरेड्डी'

संस्कृतेन सम्भाषणम् – एतत् किञ्चन व्रतम्। यत्र व्रतत्वम् अस्ति तत्र पूर्णा निष्ठा भवेत् एव। अल्पः अपि लोपः तत्र न स्यात्।

'यथाशक्ति अहं सम्भाषणं करोमि,' 'समये प्राप्ते सम्भाषणं करोमि', 'सम्भाषणशीलः यदा मिलति तदा सम्भाषणं करणीयम् इति एतम् अंशं स्मरामि' इत्यादीनि सम्भाषणव्रतविषये न सङ्गच्छन्ते।

काचित् पतिव्रता अस्ति इति भावयाम। किं तस्याः पातिव्रत्ये वैविध्यं भवति? अशीतिप्रतिशतं (८०%) पातिव्रत्यं, नवनवतिप्रतिशतं (९९%) पातिव्रत्यं, पञ्चाशत्प्रतिशतं (५०%) पातिव्रत्यम् इत्येवं तत्र भेदाः भवन्ति वा? न खलु? पातिव्रत्यं नाम तदपि व्रतम् एव। काचित् यदि पातिव्रत्यात् च्युता भवेत् तर्हि ताम् अपतिव्रतां (कुलटां) वदेम, न तु 'अंशतः पतिव्रता' इति।

एवम् एव 'संस्कृतेन सम्भाषणं व्रतम्' इति यदा वयम् अङ्गीकुर्मः तदा अंशतः सम्भाषणम् इत्यादिकं न भवेत् एव। व्रतस्य भङ्गात् आत्मा यथा खिद्यते तथा, संस्कृतसम्भाषणव्रते भङ्गः जातः चेदपि आत्मा खिद्येत। सम्भाषणव्रतस्य पालने अस्माकं विशेषावधानं स्यात्। अस्माकं संस्कृतज्ञत्वं तदा सार्थकं भवति यदा च वयं सम्भाषणव्रतम् अङ्गीकुर्मः।

सम्पुटः–७ सप्टम्बर्–१९९० सञ्चिका–६

प्रतिकृतिमूल्यं रू. ३-०० * वार्षिकं ग्राहकशुल्कं रू. ३६-००






# पाकिस्तानदेशे किं प्रचलति?

१९३३ तमे वर्षे चौधरी रहमत् अली पाकिस्तानशब्दस्य निर्माणं कृतवान्। एतस्य पदस्य अर्थः– 'पवित्रा भूमिः' इति।

'मतस्य आधारेण 'अखण्डं भारतं' द्विधा विभक्तव्यम्' इति विषयं मोहम्मद अली जिन्नावर्यस्य नेतृत्वेन युक्तः मुस्लिम् लीग् पक्षः सुदृढं प्रतिपादयति स्म। किन्तु बहवः ज्येष्ठाः विवेकिनः नेतारः एतस्मिन् विषये असम्मतिं प्रकटितवन्तः। स्वतन्त्रता, समानता, प्रजाप्रभुत्वम्, परस्परस्नेहः, शान्तिप्रियता इत्यादिभिः उदात्तैः तत्त्वैः मानवकुलम् एकसूत्रसम्बद्धं कर्तुं प्रयत्ने प्रचलति, एवं मतस्य आधारेण देशस्य विभाजनं परागतिद्योतकम् आसीत्।

भारते विभिन्नानि मतानि विभिन्नाः संस्कृतयः च सन्ति। बह्व्यः भाषाः सन्ति अत्र। विभिन्नाः आचार-व्यवहाराः दृश्यन्ते अत्र। अतः देशे कुत्रचित् कदाचित् यदि अल्पः सङ्घर्षः प्रचलेत् तर्हि तत् असहजं न। किन्तु देशस्य विभजनं, एतादृश्याः समस्यायाः परिहारः तु सर्वथा न।

एतादृश्यः समस्याः न केवलम् अस्माकं देशे, अपि तु इतरेषु देशेषु अपि सन्ति एव। परस्परावगत्या, सौहार्दचर्चया, योग्यैः शासननियमैः च समस्या परिहर्तुं शक्या। तादृशी समस्या जगति काऽपि नास्ति यस्याः परिहारार्थं मार्गः एव न स्यात्।

अस्माकं देशस्य प्रमुखाः नायकाः मुस्लिम् लीग्पक्षं बोधितवन्तः यत् विभाजनविषये अत्याग्रहः न उचितः इति। किन्तु एतेन किमपि प्रयोजनं न सिद्धम्।

आंग्लेयानां कूटनीतिः तु आसीत् यत्विभाजनपूर्वकं शासनं करणीयम् इति। अतः ते परोक्षतया मुस्लिम् लीग्वादं समर्थयन्तः प्रोत्साहितवन्तः।

अन्ते देशस्य विभागः अभवत्। किन्तु ये भागाः अवश्यं प्राप्तव्याः इति मुस्लिम्लीग् मनसि आसीत् ते सर्वे तेन न प्राप्ताः। काश्मीरं भारते एव स्थितम्। अनन्तरकाले पाकिस्तानदेशे विद्रोहः प्रवृत्तः। बंगलादेशः स्वतन्त्रः जातः।

वस्तुतः तु पाकिस्ताने यावन्तः मुस्लिम्जनाः सन्ति ततोऽप्यधिकाः सन्ति भारते। इतरे इव ते अपि भारतं स्वमातृभूमिं भावयन्ति। किन्तु बंगलादेशः हस्तच्युतः यत् तत् अपमाननं विस्मर्तुं न शक्तं पाकिस्तानेन। अतः सः पुनः पुनः– 'काश्मीरे अधिकांशाः मुस्लिम्जनाः सन्ति इत्यतः काश्मीरं पाकिस्तानस्य अङ्गं स्यात्' इति वदन् बुद्ध्या कलहम् उत्पादयन् अस्ति। काश्मीरीयान् कांश्चन विक्षिप्तान् तरुणान् रहस्यरूपेण शस्त्रग्रहणं प्रशिक्ष्य काश्मीरे अराजकताम्

उत्पादयितुं प्रयतमानः अस्ति।

एवं कुर्वतः पाकिस्तानस्य आन्तरिकी परिस्थितिः कीदृशी? सा तु दिने दिने विषमतां गच्छन्ती अस्ति। भारतात् गतानां मुस्लिमानां, पाकिस्तानस्य मूलनिवासिनां च मध्ये कलहः मारणं च निरन्तरं प्रचलत् अस्ति। सीमाप्रदेशे ये पठानजनाः निवसन्ति ते कदापि पाकिस्तानशासकेषु स्वविश्वासं न प्रकटितवन्तः। अतः ते पाकिस्तानदेशात् पृथग्भवितुम् इच्छन्तः कलहम् उत्पादितवन्तः सन्ति।

आन्तरिकस्थितिविषये व्यथितं प्रजानां मनः इतरत्र प्रेरयितुम् इच्छता पाकिस्तानेन काश्मीरविवादः एषु दिनेषु पुनः उज्जीवितः अस्ति।

मतभेदस्य कारणतः जनेषु विवादः प्रचलति यत्, तेनैव कारणेन निरपराधिनां जनानां मारणं रक्तप्रवाहोत्पादनं च प्रचलति यत् तत् तु खेदस्य विषयः।

अद्यापि जनाः मतानां नाम्ना प्रचलतः बुद्धिभेदस्य विषयाः भवन्ति इति तु नितराम् अनुकम्पार्हम्।








# ताम्रकङ्कणम्

जनकपुरनामके ग्रामे हरप्रियः नाम कश्चन महापण्डितः आसीत्। सः निःस्वार्थभावनया बहून् विद्यादानेन अनुगृहीतवान् आसीत्। जनाः बहवः तस्मै तदा तदा बहुविधानि उपायनानि यच्छन्ति स्म। अतः पण्डितस्य हरप्रियस्य जीवनं निरातङ्कं प्रचलति स्म।

हरप्रियः वार्धक्ये एकं पुत्रं प्राप्तवान्। तस्य नाम चतुर्मुखः इति। चतुमुर्खस्य विषये हरप्रियस्य महती चिन्ता। यतः विद्याग्रहणे चतुर्मुखः सर्वथा असमर्थः आसीत्। तस्य दौष्ट्यम् अपि अत्यधिकम् आसीत्। पुत्रस्य व्यवहारं परिष्कर्तुं हरप्रियः बहुधा प्रयत्नं करोति। किन्तु परिणामः तु शून्यः एव।

कदाचित् हरप्रियस्य शिष्यः महानन्दः गुरुं द्रष्टुम् आगतवान्। विद्याभ्यासस्य अनन्तरं सः अरण्यं गत्वा तपश्चर्यया अपूर्वाः शक्तीः सम्पादितवान् आसीत्। गुरुदक्षिणासमर्पणार्थम् आगतवान् अस्ति सः। गुरुदक्षिणां स्वीकर्तुं न इच्छति हरप्रियः। गुरुदक्षिणा दातव्या एव इति महानन्दस्य आग्रहः।

"भवान् सत्कीर्तिं प्राप्नोति चेत् मम तृप्तिः। अमुकः मम शिष्यः इति अहम् अभिमानं प्राप्नोमि। एतत् एव इच्छामि अहम्" इति उक्तवान् हरप्रियः।

किन्तु 'गुरुदक्षिणा स्वीकरणीया एव' इति साग्रहं वदति महानन्दः। अन्ते हरप्रियः स्वपुत्रस्य विचारं समग्रं निवेद्य उक्तवान्– "यदि भवान् शक्नुयात् तर्हि एतं सन्मार्गे प्रवर्तयतु। एतम् उपकारम् अहं गुरुदक्षिणां भावयामि" इति।

महानन्दः चतुर्मुखं स्वसमीपम् आहूय वार्तालापं कृतवान्। चतुर्मुखस्य स्वभावस्य परिवर्तनार्थं विभिन्नान् प्रयत्नान् अपि



कृतवान्। किन्तु एतेन प्रयोजनं किमपि न सिद्धम्। अन्ते सः तपश्शक्त्या एकं ताम्रकङ्कणं सृष्टवान्। तत् कङ्कणं चतुर्मुखस्य हस्ते धारयित्वा सः उक्तवान्– "वत्स! यावत् एतत् कङ्कणं भवतः शरीरे भवति तावत् भवादृशः पण्डितः सज्जनः वा अन्यः न भविष्यति। प्रतिदिनं स्नानात् पूर्वम् एतत् अपनीय सम्यक् प्रक्षाल्य स्नानानन्तरं धरतु। एतेन भवतः हितं सेत्स्यति" इति।

तस्मात् दिनात् आरभ्य चतुर्मुखस्य व्यवहारे महत् परिवर्तनम् आगतम्। सः सर्वदा सर्वत्र विनयेन व्यवहरति। अवकाशे प्राप्ते, अपूर्वं पाण्डित्यम् अपि प्रदर्शयति। पुत्रस्य व्यवहारं दृष्ट्वा आश्चर्यम् अनुभवन् हरप्रियः परीक्षणेन ज्ञातवान् यत् पुत्रः पाण्डित्येन माम् अपि अतिशेते इति। 'पूर्वजन्मनः संस्कारस्य कारणतः एवं ज्ञानं कदाचित् उद्बुद्धं भवति' इति चिन्तितवान् सः।

हरप्रियः शिष्यं महानन्दं कृतज्ञतापूर्वकम् उक्तवान्– "वत्स! अपूर्वा गुरुदक्षिणा दत्ता भवता। आजीवनं भवतः उपकारं स्मरिष्यामि अहम्" इति।

महानन्दः गुरोः पादयोः प्रणम्य ततः निर्गतवान्।

कदाचित् हरप्रियः पुत्रं दृष्ट्वा उक्तवान्– "वत्स! एतस्मिन् ग्रामे भवतः पाण्डित्यस्य गौरवं नास्ति। भवतः पाण्डित्यं वनकुसुमवत् व्यर्थं न भवेत्। अतः भवान् राजधानीं गत्वा आस्थानपण्डितानां पुरतः स्वस्य पाण्डित्यं प्रदर्श्य, राज्ञः प्रीतिं सम्पादयतु" इति।

चतुर्मुखः पितुः वचनं शिरसा वहन् राजधानीं गतवान्। राजधान्यां तेन राजदर्शनं न प्राप्तम्। निराशं तं कश्चन राजभटः उक्तवान्– "आस्थानपण्डितं विद्याधरं भवान् तोषयति चेत् राजदर्शनं विनायासं प्राप्यते" इति। चतुर्मुखः ततः विद्याधरस्य गृहं गतवान्। विद्याधरः तु चतुर्मुखम् उपेक्षया पश्यन् बहुधा उपहसन् "निर्गच्छतु इतः" इति हस्तसङ्केतेन सूचितवान्।

एतेन प्रसङ्गेन चतुर्मुखः नितरां खिन्नः।

इतःपरं ग्रामं प्रति गमनम् एव शरणम् इति चिन्तितवान् सः। किन्तु पितुः वचनानुसारम् आगत्य कार्यम् असंसाध्य प्रतिगतं चेत् पिता खिन्नः भवेत् इति चिन्तयित्वा सः ग्रामगमनविचारं परित्यक्तवान्।

अल्पेषु एव दिनेषु चतुर्मुखः रिक्तहस्तः जातः। अग्रे किं करणीयम् इति अजानन् सः आश्रयदातारं धर्मशालायाः स्वामिनम् उक्तवान्– "श्रीमन्, मया आनीतं धनं समाप्तम्। राजदर्शनं कदा लभ्येत इति न ज्ञायते। यावत् राजदर्शनं लभ्येत तावत् भवता आश्रयः दत्तः चेत् अहं भवन्तं प्रतिदिनं गीतासारं बोधयिष्यामि" इति।

एतं प्रस्तावं धर्मशालास्वामी सन्तोषेण अङ्गीकृतवान्। तस्मात् दिनात् चतुर्मुखस्य गीतासारबोधनम् आरब्धम्। प्रतिदिनं सायङ्कालसमये चतुर्मुखः गीतासारं विशदतया बोधयति। चतुर्मुखस्य बोधनं तथा परिणामकारि आसीत् यत् धर्मशालायाः स्वामिनः आसक्तिः दिने दिने वर्धते।

कदाचित् राजा राजधानीस्थान् सर्वान् धर्मशालास्वामिनः मेलयित्वा उक्तवान्– "भवन्तः सर्वे बहुसमीचीनतया धर्मशालां निर्वहन्तः सन्ति। ये धर्मशालासु निवसन्ति तेषाम् असन्तोषः यथा न स्यात् तथा कर्तुं कीदृशः प्रयत्नः अस्ति भवताम्? नूतनः कोऽपि उपायः आश्रियमाणः अस्ति चेत् वदन्तु। तेन अन्ये अपि लाभान्विताः भवेयुः।



यः उत्तमम् उपायं वदति सः पारितोषिकं प्राप्नोति" इति।

सर्वे धर्मशालास्वामिनः स्वमत्यनुसारम् एकैकम् उपायं सूचितवन्तः। चतुर्मुखस्य आश्रयदाता तु उक्तवान्– "प्रभो! धर्मशालानिर्वहणार्थं ये सामान्याः नियमाः सन्ति तान् एव पालयामि अहम्। भगवत्कृपया सर्वं समीचीनतया प्रचलति" इति।

तदा राजा पृष्टवान्– "सर्वं भगवत्कृपया इति वदति खलु भवन्? स्वेन क्रियमाणे कार्ये विश्वासः नास्ति वा भवतः?" इति।

"प्रभो! स्वकार्ये मम विश्वासः अस्ति एव। किन्तु फलाफलम् अस्मदधीनं न खलु?



भगवान् श्रीकृष्णः इति। मादृशानां का कथा!" इति उक्तवान् धर्मशालास्वामी।

एतत् श्रुत्वा महान्तं सन्तोषं प्रदर्शयन् राजा– "अहो! लौकिके व्यवहारे व्यापृताः सन्तोऽपि एवं ज्ञानसम्पन्नाः अपि सन्ति इति तु सन्तोषस्य विषयः। श्वः राजसभायां भवतः सम्माननं करिष्यामि" इति उक्तवान्।

तदा धर्मशालास्वामी विनयेन नमस्कृत्य– "प्रभो! एतस्य सम्माननस्य प्राप्त्यर्थम् अहं सर्वथा अनर्हः। मम एतस्य ज्ञानस्य कारणीभूतः महापण्डितः कश्चित् भवद्दर्शनाकाङ्क्षी मम धर्मशालायां तिष्ठति। दर्शनार्थम् अनुमतिदानेन सः अनुग्रहणीयः भवता। तस्य पाण्डित्यं भवता स्वयं परिशीलनीयम् इति मम प्रार्थना" इति निवेदितवान्।

राजा धर्मशालास्वामिनं निवेदितवान् यत् श्वः तं पण्डितं मम आस्थानम् आनयतु इति।

धर्मशालास्वामी राजास्थानतः आगत्य चतुर्मुखं प्रवृत्तं समग्रं निवेदितवान्। चतुर्मुखः तं कृतज्ञतावचनानि उक्तवान्। अनन्तरदिने तौ राजास्थानं गतवन्तौ। तत्र चतुर्मुखेण यत् पाण्डित्यं प्रदर्शितं तत् दृष्ट्वा सर्वे सन्तुष्टाः आश्चर्यचकिताः च।

राजा चतुर्मुखस्य प्रशंसां कृत्वा उक्तवान्– "महापण्डित, चतुर्मुखवर्य! भवान् यदि इतः पूर्वम् आस्थानपण्डितं

कृषिकः प्रयत्नेन कृषिं करोति। किन्तु कृषितः यत् फलं प्राप्यते तत् भगवदधीनम्। केवलभगवत्कृपायां विश्वासः अपि अनुचितः। मानवस्य प्रयत्नः, भगवतः कृपा– एतयोः संयोगात् एव फलस्य सिद्धिः" इति उक्तवान् सः धर्मशालास्वामी।

"तदस्तु, यदा कार्यस्य समीचीनं फलं प्राप्यते तदा 'मया एव सर्वं कृतम्' इति अभिमानः उत्पद्यते। अत्र उपस्थिताः बहवः तादृशेन अभिमानेन एव उक्तवन्तः। भवति स च अभिमानः न उत्पन्नः वा?" इति पृष्टवान् राजा।

"प्रभो! असमानवीरः धनुर्धरः अर्जुनः एव अङ्गीकृतवान् यत् स्वस्य विजयस्य कारणं

विद्याधरं दृष्टवान् स्यात् तर्हि विनायासम् आस्थानं प्रवेष्टुम् अशक्ष्यत्" इति।

चतुर्मुखः निवेदितवान् यत् विद्याधरः माम् उपेक्षया पश्यन् प्रतिप्रेषितवान् इति। एतत् श्रुत्वा राजा महता कोपेन चतुर्मुखम् उक्तवान्– "महानुभाव! एवं तर्हि विद्याधरेण अक्षम्यः अपराधः कृतः। एतदर्थं कः दण्डः उचितः इति निर्णीय भवान् एव तं योग्येन दण्डेन दण्डयतु। तदा एव मम मनसः समाधानम्" इति।

चतुर्मुखः एतत् अङ्गीकृत्य हस्ते धृतं ताम्रकङ्कणम् अपनीय राज्ञः पुरतः स्थापितवान्। अनन्तरं विद्याधरस्य पुरतः स्थित्वा अवाच्यैः शब्दैः बहुधा निन्दितवान्। तत्समये तस्य व्यवहारः, भाषा, कथनशैली इत्यादयः पाण्डित्यानुगुणं न आसन्। कश्चन मूर्खः ग्रामीणः इव व्यवहृतवान् सः। एतत् दृष्ट्वा सभ्याः राजा च आश्चर्यचकिताः। विद्याधरः तु किमपि वक्तुम् अशक्नुवन् खेदेन शिरः अवनमय्य स्थितवान्।

अनन्तरं चतुर्मुखः राज्ञः समीपम् आगत्य ताम्रकङ्कणं धृतवान्। राजा चतुर्मुखम् आश्चर्येण पश्यन् उक्तवान्– "श्रीमन्! भवान् तु महापण्डितः सात्त्विकः च। किन्तु अल्पे अवकाशे प्राप्ते, भवान् विद्याधरम् अवाच्यैः शब्दैः निन्दितवान्। भवता उच्चारिताः शब्दाः आस्थाने वक्तुम् अयोग्याः आसन्। भवान् किमर्थम् एवं




व्यवहृतवान्? भवतः व्यवहारस्य परमार्थः तु अन्यः एव अस्ति इति भावयामि अहम्। किं तत् इति उक्त्वा कृपया अस्माकं कुतूहलं शमयतु" इति।

तदा चतुर्मुखः म्लानवदनः सन्– "प्रभो, क्षन्तव्यः अहम्। मया यत् व्यवहृतं तदर्थम् इदानीम् अहं स्वयं लज्जाम् अनुभवामि। वस्तुतः मयि यत् पाण्डित्यं सज्जनत्वं च दृश्यते तत् न मदीयम्। तत्सर्वं एतस्य कङ्कणस्य प्रभावात् मयि आगतम्" इति वदन् स्वस्य इतिवृत्तं विस्तरेण निवेदितवान्।

चतुर्मुखस्य इतिवृत्तं सभ्याः सर्वे आश्चर्येण श्रुतवन्तः। राजा पुनरपि आश्चर्येण पृष्टवान्– "पण्डितवर्येण भवता 'ताम्रकङ्कणं धरता एव विद्याधरः दण्डनीयः

आसीत्। किमर्थं भवान् ताम्रकङ्कणम् अपनीय मम पुरतः संस्थाप्य तम् अवाच्यैः शब्दैः निन्दितवान्? उत्तमेन संस्कारेण युक्तस्य भवतः हृदये द्वेषाग्निः निहितः अस्ति इति भावयामि वा अहम्? विद्याधरः दण्डनीयः इति मया यदा उक्तं तदा तु भवान् ताम्रकङ्कणं धृतवान् आसीत् एव। तत्समये युक्तायुक्तताविवेकस्य सामर्थ्यम् आसीत् भवतः। तथापि किमर्थम् एव कृतम्?" इति।

तदा चतुर्मुखः मन्दहारपूर्वकम् उक्तवान्– "प्रभो, विद्यया पाण्डित्येन च रहितस्य मम कीदृशी स्थितिः इति भवता स्वयं दृष्टम्। स्वसामर्थ्येन प्राप्तुम् अशक्यं पाण्डित्यं मया ताम्रकङ्कणस्य कारणतः प्राप्तम् इत्यपि भवान् जानाति एव। तस्य पाण्डित्यस्य कारणतः एव मम व्यवहारे अपि परिवर्तनं दृश्यते इति अहं भावयामि। पण्डितः कश्चित् संस्कारवान् अपि भवेत् एव इति नास्ति नियमः। अत्र विद्याधरः एव प्रमाणम्। अहं प्रथमं यदा एतं दृष्टवान् तदा एषः मम पाण्डित्यस्य परीक्षाम् अकृत्वा एव उपेक्षया माम् उपहसितवान्। 'एतादृशे सन्दर्भे उपहासपात्रभूतेन जनेन कीदृशी वेदना अनुभूयते इति एषः जानातु' इति चिन्तयन् अहं ताम्रकङ्कणम् अपनीय तथा तर्जितवान्। मया सर्वदा अपि ताम्रकङ्कणं धरणीयम् इति भवान् यत् चिन्तयति तत् उचितम् एव। तथा करणं ममापि भूषणम्। 'एकैकः अपि पण्डितः स्वपाण्डित्यानुगुणं व्यवहरेत्। यथा निन्दनसमये अहं ताम्रकङ्कणम् अपनीय पार्श्वे स्थापितवान् तथा अहङ्कार-रागद्वेषासूयादीनां सद्भावे पाण्डित्यं, विवेकः वा पार्श्वे न स्थापनीयः' इति बोधयितुम् एव अहम् एवं व्यवहृतवान्। वस्तुतस्तु विद्याधरविषये द्वेषः असूया वा लेशतः अपि मयि नास्ति " इति।

चतुर्मुखस्य आशयः राज्ञा, विद्याधरेण, सभ्यैः च सम्यक् अवगतः। सन्तुष्टः राजा चतुर्मुखम् आस्थानपण्डितेषु अन्यतमं कृतवान्।






## ११

(नष्टा सेना पुनः सङ्घटनीया इति सङ्कल्पितवान् वीरसिंहः भटान् आदिष्टवान् यत् विशेषकररूपेण जनेभ्यः बलात् धान्यं सङ्गृह्य, तत् चन्द्रपुर्याम् अधिकेन मूल्येन विक्रीय आयुधानि क्रेतव्यानि इति। किन्तु जनाः एतस्मिन् विषये विशेषतः विरोधं प्रकटितवन्तः। वसन्तः नाम तरुणः जनानां मार्गदर्शकः आसीत्। तदनन्तरम्......।)

कदाचित् प्रातःकाले जयानन्दमुनिः वृक्षस्य अधः उपविश्य विश्रान्तिम् अनुभवन् आसीत्। तदा तत्र आगतः गोविन्दः नाम तदीयः शिष्यः तम् उक्तवान्– "गुरुदेव! कश्चन अवगुण्ठनधारी पुरुषः अस्माकम् आश्रमस्य उपरि दृष्टिं स्थापयित्वा इतस्ततः सञ्चरन् अस्ति। अन्येषां दृष्टितः आत्मनं रक्षन् सः जागरूकतया व्यवहरति। ह्यः अहं तं त्रिवारं दृष्टवान्" इति।

"आं वत्स! मया अपि सः दृष्टः एव। तस्य आकारस्य व्यवहारस्य च दर्शनात् ज्ञायते यत् सः कश्चन असाधारणः पुरुषः इति। विशिष्टस्य कार्यस्य साधनार्थं सः प्रयतमानः अस्ति इति भासते। सः पुनः यदा अत्र दृश्यते तदा भवान् मां सूचयतु। अहं तेन सह वार्तालापं करिष्यामि" इति उक्तवान्



प्रदेशे अटन् अस्ति इति अंशः मया लक्षितः एव। किम् अन्विष्यन् अस्ति भवान्? उचिते अंशे भवतः प्रवर्तनम् अस्ति चेत् अहम् अपि साहाय्यं करिष्यामि" इति उक्तवान् जयानन्दमुनिः।

"मम अत्र स्थितिं कोऽपि न जानाति इति चिन्तितवान् आसम्। किन्तु भवता तत् ज्ञातम् इति तु आश्चर्यस्य विषयः" इति उक्तवान् अवगुण्ठनधारी।

"मया ज्ञातं चेत् न काऽपि हानिः। अत्र यः कोऽपि आगतः चेदपि मया ज्ञायते एव। किन्तु एषः अंशः सिंहासनं बलात् वशीकृतवतः वीरसिंहस्य समीपं तु न गच्छति। अतः चिन्तां मा करोतु" इति उक्तवान् जयानन्दमुनिः।

अवगुण्ठनधारी जयानन्दमुनिं क्षणकालं पश्यन् स्थितवान्। अनन्तरं सः— "भवान् एव खलु जयानन्दमुनिवर्यः? एवं तर्हि एषोऽहं पुनः प्रणमामि" इति उक्त्वा साष्टाङ्गं नमस्कृतवान्। जयानन्दमुनिः तु मन्दहासं प्रकटयन् स्थितवान्। नमस्कारस्य अनन्तरम् अवगुण्ठनधारी पुनः उक्तवान्— "महानुभाव! मम मित्रस्य शङ्करवर्मणः मुखात् भवद्विषये मया किञ्चिदिव श्रुतम्। किन्तु मम आश्चर्यं नाम वीरसिंहस्य वार्ता भवता आद्यन्तं कथं श्रुता इति। चाराणां साहाय्यं विना एतादृशवार्तायाः ज्ञानम् असाध्यम्। एवं तर्हि वार्तानिवेदकाः के? एतत्प्रदेशे कोऽपि न दृश्यते खलु?" इति।

जयानन्दमुनिः।

कदाचित् सायङ्कालसमये सन्दीपः व्याघ्रशिशुभिः सह क्रीडन् आसीत्। क्रीडायां सन्दीपस्य चातुर्यं दृष्ट्वा पार्श्वे स्थिता भल्लूकी तदा तदा नृत्यति स्म। शिलान्तरितः सः अवगुण्ठनधारी एतत् कौतुकम् आसक्त्या पश्यन् आसीत्।

जयानन्दमुनिः विना शब्दं तस्य पृष्ठतः आगत्य उक्तवान्— "स्वागतम्" इति।

अवगुण्ठनधारी पुरुषः आश्चर्येण परिवृत्य दृष्ट्वा, शिलानां मध्यतः बहिः आगत्य करौ योजयित्वा विनयेन जयानन्दमुनिं नमस्कृतवान्।

"भवान् किमपि अन्विष्यन् एतस्मिन्

"सर्वम् अपि मनुष्याणां मुखात् एव ज्ञातव्यम् इति नियमः नास्ति खलु?" इति हसन् उक्तवान् जयानन्दमुनिः।

अवगुण्ठनधारी आश्चर्येण उक्तवान्– "मानवातीताः शक्तीः तपोबलात् प्राप्य भवान् तदाधारेण सर्वं जानन् स्यात्" इति।

"अल्पस्य एतस्य निमित्तं मानवातीतशक्तेः आवश्यकता का? तपसा तादृशीं शक्तिं सम्पाद्य एतादृशानि कार्याणि साधयितुं शक्यन्ते इति तु सत्यम्। किन्तु अरण्यस्थानां पशुपक्षिणां मैत्री सम्पादिता चेत् ततोऽपि अल्पेन प्रयासेन एतादृशानि कार्याणि साधयितुं शक्यन्ते। अतः द्वितीयः मार्गः एव उचितः खलु?" इति उक्तवान् जयानन्दमुनिः।

"एवं वा स्थितिः! व्याघ्रशिशुभिः भल्लूकेन च सह सः अल्पः शिशुः कथं निर्भीकतया क्रीडन् अस्ति इति अहम् आश्चर्यम् अनुभवन् आसम्। इदानीं सर्वं ज्ञातम्। सः बालकः कः श्रीमन्?" इति पृष्टवान् अवगुण्ठनधारी।

"एतस्य उत्तरं मत्तः प्राप्तव्यं चेत् प्रथमं भवता स्वपरिचयः वक्तव्यः" इति सूचितवान् जयानन्दमुनिः।

अवगुण्ठनधारी क्षणद्वयस्य मौनस्य अनन्तरं– "श्रीमन्! भवतः सन्निधौ गोप्यं किम्? भवति मम पूर्णः विश्वासः अस्ति" इति वदन् अवगुण्ठनम् अपसारितवान्।



जयानन्दमुनिः शान्तया मुद्रया स्थित्वा उक्तवान्– "प्रकृतिमातुः अङ्के सुखेन वर्धमानः एषः बालः भवतः औरसपुत्रः एव। भवन्तं पूर्वं कदाचित् एकवारं दृष्टवान् आसम्। तथापि युवराजस्य भवतः च रूपसाम्यम् अस्ति इत्यतः भवन्तम् अभिज्ञातवान् अहम्" इति।

एतत् श्रुत्वा शान्तिदेवः पूर्वतनां घटनां विपद्ग्रस्तां पत्नीं च स्मृतवान्। तस्य नेत्रे आर्द्रे जाते।

"राजन्! यदि भवान् जीवितः स्यात् तर्हि पत्नीं पुत्रं च अन्विष्यन् अत्र आगच्छेत् एव इति मम विश्वासः आसीत्। भवतः पत्नी एतं शिशुं मदधीनं कृत्वा भगवतः पादमूलम् आश्रितवती। भवान् जीवितः अस्ति इति तया



ज्ञातं यदि स्यात् तर्हि सा तृप्त्या प्राणान् अत्यक्ष्यत्। तथापि सा 'भगवति समग्रं भारं निक्षिपतु' इत्येतत् मम वचनम् अङ्गीकृत्य निरुद्विग्नतया एव प्राणान् त्यक्तवती। पुत्रं मदधीनं कृत्वा निश्चिन्ततां प्राप्तवती आसीत् सा। वंशोज्जीवकस्य रक्षणार्थं तया शक्तिम् अतिक्रम्य प्रयत्नः कृतः। साध्वीमणिः सा" इति उक्तवान् जयानन्दमुनिः।

एतत् श्रुत्वा शान्तिदेवः गद्गदेन स्वरेण— "श्रीमन्! तस्याः भौतिकदेहः ....?" इति पृष्टवान्।

"तत्र पश्यतु तस्याः स्मारकम्" इति वदन् जयानन्दमुनिः दूरस्थां शिलां प्रदर्शितवान्।

तत् शिलाफलकं विविधैः पुष्पैः अलङ्कृतम् आसीत्। शैशवानन्तरं प्रतिदिनम् अपि सन्दीपः मातुः स्मारकस्य उपरि भक्त्या पुष्पाणि स्थापयति स्म।

राजा उद्गच्छत् दुःखं सोढुम् अशक्तः सन् स्मारकशिलायाः समीपं गत्वा निरन्तरम् अश्रूणि स्रवितवान्।

जयानन्दमुनिः राज्ञः समीपं गत्वा विविधैः सान्त्वनवचनैः तस्य दुःखस्य उपशमनं कृतवान्।

दुःखोपशमनानन्तरं राजा मुनिं पृष्टवान्— "श्रीमन्, अहं मम पुत्रं समीपतः द्रष्टुं शक्नोमि वा?" इति।

"न इति वक्तुम् अहं कः? यतः सः भवतः औरसः पुत्रः। यथा इच्छा तथा करोतु" इति सूचितवान् जयानन्दमुनिः।

क्षणकालस्य अनन्तरं शान्तिदेवः उक्तवान्— "श्रीमन्! एतद्विषये भवतः पूर्णसम्मतिः नास्ति इति भाति। भवता मनःपूर्वकम् अनुज्ञा दत्ता चेदेव अहम् अग्रे प्रवृत्तः भवामि। अन्यथा न" इति।

"महाराज! युवराजः प्रकृतेः कृपाश्रये, प्रशान्ते परिसरे वर्धमानः अस्ति। सः तीक्ष्णमतिः सूक्ष्मग्राही च। योग्येन मार्गदर्शनेन सः अद्वितीयः पुरुषः भविष्यति। एतदर्थम् अनुकूलः परिसरः प्रयत्नेन रक्षणीयः अस्माभिः। भवन्तं यदि सः पश्येत् तर्हि एतस्य भङ्गः स्यात् इति भावयामि अहम्। सः इदानीं भवन्तम् अभिज्ञातुं



शक्नोति एव। अभिज्ञानस्य अनन्तरं पूर्वतनघटनाः सर्वाः ज्ञायन्ते तेन। 'दुष्टाः सज्जनं मम पितरं विना कारणं पीडितवन्तः'' इति जानतः तस्य कोमले मनसि द्वेषबीजानि उप्तानि भवन्ति। प्रतीकारः साधनीयः इति इच्छा तीव्रा भविष्यति। किन्तु तदर्थं तस्य शरीरसामर्थ्यम् इदानीं नास्ति खलु? अतः एव अहं वदामि – प्रशान्ते परिसरे तदीयं जीवनं विकसितं भवतु इति। द्वेषज्वालया तत् दग्धं न भवेत्'' इति उक्तवान् जयानन्दमुनिः।

''एवं तर्हि पुत्रव्यामोहः मया निग्रहणीयः इति भवतः आशयः। एवं खलु?'' इति पृष्टवान् शान्तिदेवः।

''बालस्य हितस्य साधनार्थम् एवं करणम् अनिवार्यम्। किन्तु एषः बालः भवतः औरसः पुत्रः। अतः एतद्विषये एवम् एव करोतु इति आदेष्टुं नास्ति मम अधिकारः। यथा इच्छा तथा करोतु'' इति उक्तवान् जयानन्दमुनिः।

''बालस्य मम च हितम् इच्छता भवता यः मार्गः निर्दिष्टः तेन एव मार्गेण अग्रे गच्छामि अहम्। मम पुत्रं जागरूकतया रक्षति भवान् इति विश्वासः अस्ति मम। भवता पाठ्यमानान् विद्याविशेषान् पाठयितुम् अपि अहं न अर्हामि। अन्यच्च मया सद्यःकरणीयं कार्यम् अन्यदेव अस्ति'' इति उक्तवान् राजा शान्तिदेवः।

''किं तत् कार्यम्?'' इति पृष्टवान् जयानन्दमुनिः।

''महात्मन्! इदानीं सुमेधराज्ये कीदृशी परिस्थितिः अस्ति इति भवान् जानाति वा न वा इति अहं न जानामि। मां, मम पत्नीं, पुत्रं च मारयितुं प्रयत्नं कृतवान् खलु वीरसिंहः? अनन्तरं मम पत्नीपुत्रयोः का गतिः जाता, अहं जीवामि वा न वा इति सः न जानाति। अतः तस्य उद्विग्नता। द्वित्रेषु सन्दर्भेषु मया यः आघातः कृतः तेन तु सः पानमत्तः कपिः इव जातः अस्ति। 'विवेकभ्रष्टानां भवति विनिपातः शतमुखः' इति प्राचीनोक्तिः एव अस्ति। वीरसिंहः इदानीं अधःपतनमार्गे अस्ति। प्रतिवेशिदेशाः जेतव्याः इति तस्य मनसि तीव्रा इच्छा आसीत्। धनलोभं जनयित्वा सः एतदर्थं दलपतीन् प्रोत्साहितवान्। मम श्वशुरस्य राज्यस्य

अमृतपुर्याः उपरि आक्रमणार्थं तेन प्रस्थितम्। किन्तु सौभाग्यवशात् सुमतीनद्याम् आकस्मिकप्रवाहः आगतः। तेन प्रवाहेण तस्य सेना नीता। तस्य आयुधसङ्ग्रहः अपि नष्टः। नूतनस्य सैन्यस्य निर्माणार्थम् इदनीं सः प्रजाभ्यः धान्यानि बलात् वशीकुर्वन् अस्ति। एतादृशेषु तस्य स्वेच्छाकार्येषु अहं यथाशक्ति विघ्नम् उत्पादयन् अस्मि" इति निवेदितवान् शान्तिदेवः।

एतानि वचनानि श्रुत्वा सन्तोषेण शिरः चालयन् उक्तवान् जयानन्दमुनिः— "राजन्! सुमेधराज्ये प्रचलन्ति घोरकृत्यानि सर्वाणि ज्ञायन्ते मया। एतावदेव न, वीरसिंहस्य भटानां स्वेच्छाचारं प्रबलं निरोद्धुं केचन युवकाः बद्धकटयः सन्ति इति, तादृशानां युवकानां ग्रहणार्थं मारणार्थं च वीरसिंहः प्रयत्नं कुर्वन् अस्ति इति च जानामि अहम्। सः इदानीं पानमत्तः कपिः केवलं न, वृश्चिकेन दष्टः, भूतेन आविष्टः चापि अस्ति। अतः सः स्वयं न जानाति यत् स्वेन किं क्रियमाणम् अस्ति इति। अस्माभिः एतस्मिन् सन्दर्भे जागरूकतया अग्रिमं पदं स्थापनीयम्। युवकानां सङ्घटनं कृत्वा योग्येन मार्गेण युद्धम् आरम्भणीयम्। ततः पूर्वं 'भवता स्वेच्छाकृत्यानि स्थगनीयानि' इति वीरसिंहः सामोपायेन सूचनीयः। तावता अपि सः सन्मार्गं न आश्रयति चेत् अन्तिमः दण्डोपायः एव शरणम्। किन्तु युद्धसन्दर्भे सामान्याः प्रजाः पीडिताः यथा न भवेयुः तथा जागरूकता आश्रयणीया अस्माभिः" इति।

"मम अभिप्रायः अपि एवम् एव अस्ति श्रीमन्" इति उक्तवान् शान्तिदेवः।

"देशरक्षणार्थं ये बद्धकटयः सन्ति तादृशाः वीराः युवकाः सुमेधराज्यस्य सीमायां स्थिते अरण्ये एकत्रीकरणीयाः। तेन अस्माकं कार्ये सौकर्यं सेत्स्यति" इति सूचितवान् जयानन्दमुनिः।

"तथैव भवतु" इति वदन् जयानन्दमुनेः वचनं मनसा अङ्गीकृतवान् शान्तिदेवः।

—(अनुवर्तते)



# कर्णेजपे विश्वासः

भीमसेनः राजारामः च आत्मीयौ सुहृदौ। किन्तु कदाचित् केनापि कारणेन तयोः मतिभेदः उत्पन्नः। अतः इदानीं परस्परं द्विषतः तौ।

कदाचित् ग्रामसीमायां स्थिते शिवमन्दिरे तयोः मेलनं जातम्। तदा भीमसेनः राजारामम् उक्तवान्– "मित्र! वयं मानवाः, बुद्धियुक्ताः च। सर्वेषां वचनेषु सर्वदा विश्वासः सर्वथा अनुचितः। पूर्वापरम् आलोच्य विश्वासः करणीयः। वस्तुस्थितिः का इति प्रयत्नेन ज्ञातव्यम्" इति।

तदा राजारामः उक्तवान्– "किं वदन् अस्ति भवान्? भवतः वचनस्य आशयः मया सम्यक् न गृहीतः। एतस्य कथनस्य पृष्ठभूमिका का?" इति।

"मम आशयः कथं वा ज्ञायेत? ये भवतः अहितम् इच्छन्ति तादृशानां वचनं सम्यक् अवगच्छति भवान्" इति उक्तवान् भीमसेनः।

"अये, अलं द्राविडप्राणायामेन। यत् वक्तव्यं तत् सुस्पष्टं कथयतु तावत्" इति उक्तवान् राजारामः।

"मया श्रुतं यत् भवान् राजेन्द्रस्य कर्णेजापं श्रुत्वा मह्यं क्रुध्यन् अस्ति इति। 'भीमसेनं यमसदनं प्रेषयिष्यामि' इति भवता राजेन्द्रस्य पुरतः उक्तम् इत्यपि श्रुतम्। कर्णेजपस्य वचने विश्वासः किम् उचितः? भवान् एव चिन्तयतु" इति उक्तवान् भीमसेनः।

तदा राजारामः हसन् पृष्टवान्– "मया एवम् उक्तम् इति भवान् कथं ज्ञातवान्?" इति।

"भूपेन्द्रः मां सर्वम् उक्तवान् अस्ति" इति उक्तवान् भीमसेनः।

"कर्णेजापः न श्रोतव्यः इति खलु भवान् मां वदन् अस्ति। एवं वदता भवता किं कृतम्? कर्णेजपे विश्वासः कृतः। एवं न वा?" इति पृच्छन् उच्चैः हसितवान् राजारामः।

इदानीं भीमसेनः स्वस्य अविवेकितां ज्ञातवान्। सः अपि उच्चैः हसितवान्।





# स्वप्नसुन्दरी

यथा वृक्षशाखया निर्मितः कुठारः वृक्षच्छेदने एव उद्युक्तः भवति तथा मानवशरीरम् आश्रित्य स्थित्वा अपि मानवपीडनम् एव स्वकर्तव्यं मन्यमानं वेतालं कथमपि वशीकर्तुम् इच्छन् त्रिविक्रमः पुनरपि वृक्षस्य समीपं गतवान्। वृक्षम् आरुह्य शवं स्कन्धे आरोप्य अधः आगतवान्। अनन्तरं मौनं श्मशानाभिमुखं प्रस्थितवान् च। तदा शवान्तर्गतः वेतालः अवदत्– "अये राजन्! देवलोकसुन्दरीम् अमूल्यं निधिनिक्षेपं वा वशीकर्तुं केचन एवं मध्यारात्रे घोरे श्मशानमार्गे सञ्चरन्ति। धीरः भवान् तादृशं कार्यं कर्तुम् अर्हः एव। किन्तु केचन एवं प्रयत्नार्थम् उद्युक्ताः सन्तोऽपि, सामर्थ्ये अक्षीणे अपि, फलप्राप्तिसमये कार्यात् विमुखाः भवन्ति। एतादृशाः अविवेकिनः इत्येव खलु वक्तव्यम्? पूर्वं कश्चन राजकुमारः तादृशः

## वेतालकथा



आसीत्। मार्गायासपरिहारार्थं तस्य कथां श्रावयामि। श्रद्धया शृणोतु तावत्'' इति।

अनन्तरं वेतालेन कथा आरब्धा–

पूर्वं मणिपुरनामकं राज्यं माणिक्यवर्मा नाम राजा पालयन् आसीत्। सः सन्तानप्राप्त्यर्थं बहुधा प्रयत्नं कुर्वन् आसीत्। वार्धक्ये, तेन सुधीरकुमारनामकः पुत्रः प्राप्तः। यदा सुधीरः तारुण्यं प्राप्तवान् तदा माणिक्यवार्मा नितरां वृद्धः जातः आसीत्। सः निश्चितवान् यत् एकमात्रस्य पुत्रस्य विवाहम् अविलम्बेन निर्वर्त्य राज्यभारः तस्मै अर्पणीयः इति।

तदर्थं माणिक्यवर्मा योग्यायाः राजकुमार्याः चयनार्थं प्रतिनिधीन् नियोजितवान्। तैः आनीतानां वार्तानाम् आधारेण राजा निर्णीतवान् यत् रत्नगिरिराज्यस्य राजकुमारी रत्नप्रभा एव योग्या वधूः इति।

माणिक्यवर्मा रत्नप्रभायाः चित्रपटम् आनाय्य सुधीराय प्रदर्शयन् उक्तवान्– "वत्स! अहम् आसन्नमरणः अस्मि। इतः परं राज्यपालनभारः भवता वोढव्यः इति मम इच्छा। प्रथमं विवाहः भवेत्। अनन्तरम् एव पट्टाभिषेकः। एषा रत्नगिरिराज्यस्य राजकुमारी रत्नप्रभा योग्या वधूः इति मम आशयः'' इति।

"विवाहविषये सम्यक् आलोच्य श्वः मम निर्णयं वदिष्यामि'' इति उक्त्वा रत्नप्रभायाः चित्रपटेन सह स्वमन्दिरं गतवान् सुधीरः।

रात्रौ स्वप्ने सुधीरेण काचित् सौन्दर्यखनी तरुणी दृष्टा। सुवर्णवर्णेन युक्ता आसीत् सा। तस्याः नेत्रे कमलदले इव आस्ताम्। सुदीर्घः कान्तियुक्तः केशराशिः तस्याः। चम्पकसदृशी नासिका। सा मन्दहासपूर्वकं सुधीरं सकृत् दृष्ट्वा क्षणमात्रेण ततः अदृश्या अभवत्।

अनन्तरक्षणे एव सुधीरः जागरितः अभवत्। तस्यां रात्रौ एतदनन्तरं तेन निद्रा एव न प्राप्ता। 'एतादृशी सुन्दरी लोके कुत्रापि स्यात् एव' इति वदति सुधीरस्य अन्तरङ्गम्। 'सा एव परिणेतव्या' इति निश्चितवान् सुधीरः।

अनन्तरदिने सः पितरम् उक्तवान्–

"किञ्चित्कालं यावत् देशसञ्चारं कृत्वा प्रजानां स्थितिः स्वयं ज्ञातव्या इति मम सङ्कल्पः। राज्यभारनिर्वहणे प्रवर्तनात् पूर्वम् एतादृशः अनुभवः प्राप्तः चेत् वरं खलु? देशसञ्चारं कृत्वा प्रत्यागत्य अहं विवाहितः भविष्यामि" इति।

'एतत् अपि उचितम् एव' इति भावयन् माणिक्यवर्मा स्वस्य अनुज्ञां दत्तवान्। अनन्तरदिने एव सुधीरः सामान्यनागरिकस्य वेषं धृत्वा अश्वम् आरुह्य एकाकितया प्रासादात् निर्गतवान्। देशे चतसृषु दिक्षु स्वप्नसुन्दरी द्रष्टव्या इति तस्य सङ्कल्पः आसीत्।




सुधीरः बहुषु प्रदेशेषु अटितवान्। तत्र तत्र धर्मशालासु तिष्ठन् धर्मशालास्वामिनं तत्प्रदेशस्य वैशिष्ट्यविषये पृच्छति सः। वाणिज्यकार्यार्थम् आगतवान् अस्मि इति आत्मनः परिचयं वदन्, स्वप्नसुन्दर्याः विषयम् अपि वदति सः। एतादृश्याः सुन्दर्याः कुत्रापि स्थितिः ज्ञायते वा इति कुतूहलेन पृच्छति सः।

"तादृशी सुन्दरी न दृष्टा, न श्रुता वा। मनसः दौर्बल्यकारणतः एतादृशाः स्वप्नाः दृश्यन्ते। काऽपि वधूः परिणीता चेत् सर्वं सम्यक् भविष्यति" इति हसन्तः वदन्ति जनाः।

सुधीरः तु अन्वेषणप्रयत्नं न त्यजति। ग्रामेषु नगरेषु च अन्विष्यति सः। किन्तु कुत्रापि स्वप्नसुन्दर्याः वार्ता न श्रूयते। निरन्तरम् अटनं क्रियते इत्यतः समये अन्नाहारादिकं न सेव्यते सुधीरेण। एतत्कारणतः तापवृष्ट्यादिबाधाकारणतः च सुधीरस्य रूपं सर्वथा परिवृत्तम् अस्ति।

एवं सर्वत्र अटन् श्रान्तः सुधीरः कदाचित् मध्याह्नसमये कस्याश्चित् नद्याः तीरे वृक्षस्य अधः उपविष्टवान्। अश्वं चरणार्थं प्रेषितवान् च। शीतलस्य वायोः स्पर्शस्य कारणतः तेन तत्रैव निद्रा प्राप्ता। यदा जागरणं जातं तदा सूर्यः अस्तं गच्छन् आसीत्।

ततः उत्थाय अश्वम् अन्विष्टवान् सुधीरः। अश्वः समीपे कुत्रापि न दृष्टः।



'चरन् अश्वः दूरं गतः स्यात्' इति भावयन् सः नदीतीरे एव अग्रे गतवान्।

किञ्चिद्दूरं यदा गतं तदा सुधीरः मीनग्रहणार्थं बडिशं प्रसार्य निश्चलम् उपविष्टां काञ्चित् तरुणीं दृष्टवान्।

सुधीरः तस्याः समीपं गतवान्। सा तु निश्चलम् उपविष्टा अस्ति। सुधीरः किञ्चित् अग्रे गत्वा तां पृष्टवान्– "भगिनि! अत्र कोऽपि अश्वः आगतः वा? भवत्या अश्वः दृष्टः वा?" इति।

अकस्मात् मानववचनं श्रुत्वा दिग्भ्रान्ता सा तरुणी मुखं परिवृत्य दृष्टवती। अहो आश्चर्यम्! यस्याः निमित्तम् एतावत्पर्यन्तं सुधीरेण अन्वेषणं कृतं, या च स्वप्ने दृष्टा, यां च निरन्तरं ध्यायन् अस्ति सः, सा एव स्वप्नसुन्दरी पुरतः अस्ति!

"अहो! मम अन्वेषणं फलितम्। मया स्वप्ने दृष्टा सुन्दरी भवती एव। भवत्याः अन्वेषणार्थं मया सुदीर्घः समयः यापितः। इदानीम् इष्टं सिद्धम्। आगच्छतु मया सह। भवतीं परिणेष्यामि अहम्" इति उद्वेगयुक्तेन स्वरेण उक्तवान् सुधीरः।

एतानि वचनानि श्रुत्वा चकिता भीता च सा तरुणी बडिशं तत्रैव परित्यज्य कुटीरं प्रति वेगेन धावितवती।

ताम् एव अनुसरन् सुधीरः कुटीरस्य समीपं गतवान्। तावता कश्चन वृद्धः कुटीरात् बहिः आगच्छन् सुधीरं परीक्षादृष्ट्या आपादमस्तकं दृष्ट्वा– "कः भवान्? कुतः आगतः? कौ च भवतः मातापितरौ? 'मया स्वप्ने दृष्टा भवती एव, भवतीम् अहं परिणेष्यामि' इति भवान् मम पुत्रीम् उक्तवान् इति श्रुतम्। ताम् अनुसृत्य अत्र आगतः अस्ति अपि। दर्शनेन तु भवान् सत्कुलोत्पन्नः इव भासते। किन्तु किम् एतादृशः व्यवहारः भवते शोभते? कीदृशः व्यवहारः एषः!" इति कोपमिश्रितस्वरेण उक्तवान्।

वृद्धस्य प्रश्नान् श्रुत्वा दिग्भ्रान्तः सुधीरः क्षणकालं मौनं स्थितवान्। अनन्तरं क्षीणेन स्वरेण वृद्धम् उद्दिश्य– "भवता बहवः प्रश्नाः पृष्टाः। मम तु एकम् एव उत्तरम् –

अहं कश्चन मूर्खः इति'' इति उक्त्वा वृद्धं नमस्कृत्य मौनं ततः निर्गतवान्।

अनन्तरं राजधानीं प्रत्यागत्य रत्नप्रभां परिणीय प्रजारञ्जकः इति ख्यातिं प्राप्य चिरकालं जीवितवान्।

वेतालः एवं कथां समाप्य अवदत्– ''राजन्! महता श्रमेण सुधीरः स्वप्ने दृष्टां सुन्दरीम् अन्विष्टवान्। किन्तु तस्याः पितरम् उद्दिश्य 'अहं कश्चन मूर्खः' इति उक्त्वा प्रत्यागतवान्। आत्मनः परिचयं न उक्तवान्। किमर्थम् एवं कृतं तेन? निरन्तरभ्रमणात् रूपपरिवर्तनं यथा जातं तथा बुद्धिपरिवर्तनम् अपि जातं वा? किमर्थं सः तथा व्यवहृतवान्? वस्तुतः सः मतिभ्रष्टः एव वा? एतस्य प्रश्नस्य योग्यं परिहारं जानन् अपि यदि भवान् न वदेत् तर्हि भवतः शिरः सहस्रधा भग्नं भवेत्'' इति।

तदा मौनं स्थातुम् अशक्तः त्रिविक्रमः एवम् उक्तवान्– ''सुधीरः मतिभ्रष्टः मूर्खः वा न। किन्तु सः विवेकेन व्यवहृतवान् इति वक्तुम् अपि न शक्यते। स्वप्ने दृष्टायाः अज्ञातकुलगोत्रायाः अन्वेषणार्थं प्रयत्नः एव मूर्खतायुक्तं कार्यम्। वृद्धस्य प्रश्नानां श्रवणेन तेन एषः अंशः ज्ञातः। 'सः वृद्धः तु सामान्यः जनः। तादृशः अपि पुत्र्याः परिणयविषये विशेषतः जागरूकः। पुत्रीं परिणेतुं सिद्धः एषः वरः योग्यः वा न वा इति परीक्षते सः। अहं तु राजकुमारः सन्, भाविनी राज्ञी कीदृशी स्यात्? तस्याः योग्यता का स्यात्? इति न चिन्तितवान् एव। स्वप्ने दृष्टायाः अन्वेषणे उद्युक्तः अहं, योग्यता चिन्तनीया इत्यंशं विस्मृतवान् आसम्। आत्मनः परिचयं वदामि चेत् मम गौरवस्य हानिः स्यात्' इति आलोच्य विवेकं जागरितवन्तं वृद्धं नमस्कृत्य ततः निर्गतवान् सुधीरः'' इति।

एवं वदता त्रिविक्रमेण मौनभङ्गः कृतः आसीत्। अतः शवान्तर्गतः वेतालः ततः अदृश्यः भूत्वा यथापूर्वं वृक्षस्य शाखाम् अवलम्बितवान्।

(मूलकथा – एं.के. **ईश्वरराव्**)





# अपराधान्वेषणम्

मलयवतीनगरे सर्वविधैः आनुकूल्यैः युक्ता काचित् धर्मशाला आसीत्। सा सुविशाला अपि आसीत्। अतः राजधानीम् आगतैः जनैः सा सदाऽपि पूर्णा भवति स्म।

कदाचित् वीरभद्रः नाम धनिकः कस्यचित् कार्यस्य निमित्तं राजधानीम् आगतः तस्यां धर्मशालायां वसतिं कृतवान्। एतस्मिन् सन्दर्भे तदीयम् एकं सुवर्णकङ्कणं केनापि चोरितम्। धनिकः प्रथमं पार्श्वप्रकोष्ठनिवासिनः पृष्ट्वा, तेषु केनापि तत् न प्राप्तम् इति ज्ञात्वा अन्ते धर्मशालास्वामिनं चौर्यविषयं निवेदितवान्।

शिवस्वामी नाम सेवकः प्रकोष्ठवासिनां परिचर्यार्थं नियुक्तः आसीत्। धर्मशालास्वामी शिवस्वामिनं स्वसमीपम् आहूय– "भवता कङ्कणं कुत्रापि दृष्टं वा? परिचर्यार्थं भवान् अत्रैव अटन् भवति खलु? अतः भवन्तं पृच्छामि" इति उक्तवान्।

एतत् श्रुत्वा शिवस्वामी आश्चर्यं प्रकटयन्– "मया कङ्कणं कुत्रापि न दृष्टम्। तद्विषये अहं किमपि न जानामि" इति उक्तवान्।

शिवस्वामिनः वस्त्रेषु प्रकोष्ठे गृहे च अन्वेषणं कृतम्। किन्तु किमपि न लब्धम्। 'वीरभद्रः यस्मिन् प्रकोष्ठे निवसति तस्य प्रकोष्ठस्य अवेक्षकः शिवस्वामी एव आसीत्। तत्र अन्यः कोऽपि आगन्तुं नार्हति। चौर्यं शिवस्वामिना एव कृतं स्यात्। अहं न जानामि इति वदन् सः चौर्यं गोपयन् अस्ति, तावदेव' इति विचिन्त्य शिवस्वामिनं राजभटाधीनं कृतवान् धर्मशालास्वामी। राजभटाः तं बद्ध्वा विचारणार्थं राजसमीपं नीतवन्तः।

भटानां मुखतः प्रवृत्तं समग्रं ज्ञातवान् राजा शिवस्वामिनं पश्यन् उक्तवान्– "अये!

जनरहिते सन्दर्भे सुवर्णस्य कङ्कणस्य दर्शनात् लोभं प्राप्य भवान् चौर्यं कृतवान् स्यात्। तत् कङ्कणम् अन्यत्र कुत्रापि रहसि स्थापितवान् अपि स्यात्। भवते दशनिमेषात्मकः अवधिः दीयते। तदभ्यन्तरे भवता अपराधः अङ्गीकरणीयः। तथा कृतं चेत् भवान् क्षमायाः पात्रं भवष्यिति। भवन्तं दण्डनात् मोचयिष्यामि" इति।

किन्तु शिवस्वामिनः तु पूर्ववत् एव उत्तरम्– "अहं किमपि न जानामि" इति।

राज्ञः आस्थाने वाक्चतुरः विदूषकः कश्चित् आसीत्। सः यथा जनरञ्जने समर्थः तथैव वाक्चातुर्यबलात् शठस्य मुखात् सत्यस्य निस्सारणे अपि समर्थः एव। अतः राजा एतत्सन्दर्भे विदूषकः एव शरणम् इति भावयन् विदूषकं साकूतं दृष्टवान्।

विदूषकः आसनात् उत्थाय शिवस्वामिनः समीपे स्थित्वा पृष्टवान्– "धनिकः वीरभद्रः धर्मशालां कदा आगतवान्?" इति।

"त्रिभ्यः दिनेभ्यः पूर्वम्" इति उत्तरं दत्तवान् शिवस्वामी।

"तेन धृतं सुवर्णकङ्कणं कीदृशम् आसीत्?" इति पृष्टवान् विदूषकः।

"अहं न जानामि" इति उक्तवान् शिवस्वामी।

"भवतः ऋते अन्यः कोऽपि तं प्रकोष्ठं न प्रविशति। एतत् सत्यं खलु?" इति पृष्टवान् विदूषकः।



"आम्" इति उत्तरं दत्तवान् शिवस्वामी।

"धनिकः वीरभद्रः सुवर्णकङ्कणं सर्वदा धरति स्म, उत भोजन-स्नान-निद्रादिसमये पार्श्वे स्थापयति स्म?" इति पृष्टवान् विदूषकः।

"तत् सुवर्णकङ्कणं कीदृशम् इत्येव न जानामि खलु अहम्" इति उक्तवान् शिवस्वामी।

अनन्तरम् अपि विदूषकः बहुविधान् प्रश्नान् पृष्टवान्। किन्तु तेन किमपि प्रयोजनं न सिद्धम्।

अन्ते विदूषकः महाराजम् उक्तवान्– "प्रभो! एषः कर्मकरः चोरः न। यतः यः अपराधं करोति तस्य हृदये कोणे कुत्रापि अधैर्यं तिष्ठति एव। किन्तु एतस्य व्यवहारे

तादृशं न दृष्टम्। एषः निर्दोषी इत्यत्र नास्ति संशयः'' इति।

विदूषकस्य वचनं श्रुत्वा राजा मन्दहासपूर्वकम् उक्तवान्– ''यदि एषः नटनाचतुरः भवेत् तर्हि दोषं सर्वथा गोपयन् समर्थतया अभिनेतुम् अर्हति खलु?'' इति।

''आं प्रभो, मुखे कटु स्थापयित्वा यः मधुरखादनम् अभिनयति सः नटाग्रेसरः एव भवेत्। तादृशः सहस्रं दोषान् कृतवान् स्यात् चेदपि सम्माननार्हः एव। 'एषः शिवस्वामी वास्तविकतया चौर्यं कृत्वा निर्दोषित्वम् अभिनयन् अस्ति' इत्येतत् प्रमाणितं भवति चेत् एषः सम्माननम् अर्हति, न तु दण्डनम्। तथा चेत् सुवर्णकङ्कणदानेन एषः सत्करणीयः। आस्थाननटमण्डल्याः नायकस्थाने एषः नियोजनीयः च'' इति उक्तवान् विदूषकः।

राजा अङ्गीकारपूर्वकं शिरः चालितवान्। तदा शिवस्वामी राजानं विनयेन नमस्कुर्वन्– ''दोषी सन् यः निर्दोषित्वं समर्थतया अभिनयति तस्य सम्माननं क्रियते वा? तस्य दण्डनं न क्रियते वा? तर्हि अहम् अस्मि तादृशः। यद्यहं निश्चिनोमि तर्हि यं कमपि भावं गोपयितुं शक्नोमि। गोपितं भावं ज्ञातुं ब्रह्मा अपि न शक्नोति'' इति वदन् चौर्यम् अङ्गीकृत्य कङ्कणं यत्र स्थापितं तत् स्थलम् अपि सूचितवान्।

तदा विदूषकः करताडनपूर्वकं महाराजम् उक्तवान्– ''प्रभो! सत्यं निर्गतं पश्यतु, मुखात्। मधुलिप्तः खड्गः इव एषः। एतादृशाः लोके तिष्ठन्ति चेत् सदापि अपायः भवेत् एव। आजीवनकारागारवासरूपेण दण्डनेन एषः सत्करणीयः'' इति।

''किम् इदम्? मनसि एकं, वचसि अन्यत्? ....'' इति क्रोधेन किमपि वक्तुम् उद्युक्तः शिवस्वामी। किन्तु तदभ्यन्तरे राजभटाः आगत्य तं कारागारं प्रति आकृष्य नीतवन्तः।

विदूषकस्य चातुर्यं दृष्ट्वा महान्तं सन्तोषम् अनुभवन् राजा तं विशेषतः सत्कृतवान्।



# ज्ञानभाण्डागारम्

## सः कः स्यात्?

तिरुचनापल्लिराज्यस्य राज्ञः विजयरङ्गचोक्कलिङ्गस्य तु नगरे मन्दिरस्य पार्श्वे निवसति संन्यासिनि विशेषश्रद्धा भक्तिः च। राजा कदाचित् चिन्तितवान् यत् अत्युपयोगि अमूल्यं वस्तु किमपि तस्मै संन्यासिने उपायनरूपेण अर्पणीयम् इति।

नगरस्य कश्चन वणिक् वाणिज्यनिमित्तं काश्मीरं गच्छन् आसीत्। प्रस्थानात् पूर्वं सः राजानं द्रष्टुम् आगतः। राजा तं वणिजम् उक्तवान् यत् काश्मीरात् प्रत्यागमनसमये अमूल्यं राङ्कवम् एकम् आनयतु इति। एतदनुगुणं सः वणिक् काश्मीरात् अमूल्यं राङ्कवम् आनीय राज्ञे दत्तवान्। राजा तं संन्यासिनम् आस्थानम् आनाय्य तस्मै तत् राङ्कवम् उपायनरूपेण अर्पितवान्। अनन्तरदिने राजभटः आगत्य राजानं निवेदितवान्– "प्रभो! सः संन्यासी गर्वितः इति भाति। भवता श्रद्धया दत्तं तत् राङ्कवं सः भिक्षुकाय दत्तवान् अस्ति" इति।

राजा संन्यासिनम् आनाय्य एतद्विषये पृष्टवान्। तदा संन्यासी उक्तवान्– "मया तत् राङ्कवं दिव्याय आत्मने समर्पितम् अस्ति" इति।

एतत् उत्तरं श्रुत्वा राजा क्षणकालम् आश्चर्यचकितः। अनन्तरक्षणे एव सः ज्ञातवान् यत् एषः महात्मा सर्वेषु प्राणिषु भगवन्तं पश्यन् अस्ति इति। वदन्तु, सः महात्मा कः स्यात्?

(उत्तरं ३६तमे पृष्ठे)

## भवन्तः जानन्ति वा?

१. अस्माकं वासभूमिः पृथिवी कदा उत्पन्ना?
२. एतस्यां भूमौ प्राणिनां सृष्टिः कदा जाता?
३. 'विश्व'शब्दस्य कः अर्थः?
४. कया अन्तरिक्षनौकया अङ्गारकग्रहः गतः? कदा तया स च ग्रहः स्पृष्टः?
५. एतदर्थं तया कियद्दीर्घकालं यावत् प्रयाणं कृतम्?
६. तच्च प्रयाणं कियद्दीर्घम् आसीत्?

(उत्तराणि ३६तमे पृष्ठे)

# अङ्गराज्यं

अङ्गराज्यस्य नाम्नः श्रवणात् एव महाभारते प्रस्तुतः दानवीरकर्णः स्मर्यते। दुर्योधनः तम् अङ्गराज्याधिपतिं कृतवान् आसीत्। तथापि कर्णस्य जीवनस्य अधिकः भागः हस्तिनापुरे एव यापितः अभवत्। कुरुक्षेत्रयुद्धे कर्णेन वीरगतिः प्राप्ता।

अद्यतनस्य बिहारराज्यस्य पूर्वभागः एव प्राचीने काले अङ्गराज्यनाम्ना आहूयते स्म। तत्काले एषः प्रदेशः सम्पद्युक्तः आसीत्। कालान्तरे एषः भागः मगधसाम्राज्यस्य अन्तर्गतः अभवत्। अङ्गदेशस्य राजधानी चम्पानगरम् अतिरमणीयम् आसीत्। राजमहल् पर्वतश्रेण्याः पश्चिमदिशि चम्पा-गङ्गानद्योः सङ्गमस्य समीपे चम्पानगरम् आसीत्।

क्रि.श. २ शताब्दे भारतदेशतः केचन पथिकाः 'अन्नं' प्रदेशं प्रति (यश्च प्रदेशः इदानीं वियेट्नां नाम्ना ख्यातः) गतवन्तः। तैः तत्र राज्यं स्थापितम्। स्वराज्यस्य राजधान्याः नाम 'चम्पा' इति निश्चितं च। ततः आरभ्य चम्पा प्रसिद्धिं गता।

इदानीम् अङ्गराज्यं बिहारराज्ये अस्ति इति तु सत्यम्। किन्तु कालकारणतः तस्य राज्यस्य स्वरूपं तु सर्वथा विनष्टम् अस्ति। भागलपुरसमीपस्थौ 'चम्पानगरम्'




'चम्पापुरम्' इत्येतौ ग्रामौ प्राचीनं चम्पानगरं स्मारयतः।

ये यात्रिकाः भागल्पुरं गच्छन्ति ते कोलगांव्समीपे स्थितस्य शिलामन्दिरस्य गुहानां च दर्शने कुतूहलिनः भवन्ति।

# चम्पानगरं च

भागल्पुरसमीपे अन्यानि अपि कानिचन दर्शनीयानि स्थलानि सन्ति एव। किन्तु केभ्यश्चित् वर्षेभ्यः पूर्वम्, इतिहासप्रसिद्धस्य एतस्य चम्पानगरस्य विषये बहवः अधिकं न जानन्ति स्म।

# र स वा र्ता:

## अनुकरणस्यापि गौरवम्

श्रेष्ठैः कलाकारैः निर्मितानां चित्राणां मूल्यम् अत्यधिकम् इति भवन्तः जानन्ति एव। अतः केचन प्रसिद्धानां चित्राणां यथावत् प्रतिकृतिं कुर्वन्ति। कदाचित् एताः प्रतिकृतयः मूलभ्रमं जनयन्ति अपि।

शताधिकवर्षेभ्यः एतादृश्यः प्रतिकृतयः सङ्गृहीताः – आंग्लेयवस्तुसङ्ग्रहालयविभागेन। तेन एतादृश्यः प्रतिकृतयः सार्वजनिकप्रदर्शनार्थं स्थापिताः। एताः च मूलकारेण निर्मिताः, अपि तु अनुकर्त्रा केनचित्। तथापि अनुकर्ता सः अपि कश्चन समर्थः कलाकारः एव स्यात् इत्यतः एतासाम् अपि काचित् योग्यता भवति एव।



# सम्पादयेम वयं साहित्यज्ञानसम्पदम्

१. प्रसिद्धस्य कस्यचित् आंग्ललेखकस्य ग्रन्थे काश्चन प्राचीनाः भारतीयाः कथाः प्रविष्टाः सन्ति। सः लेखकः कः?

२. तदीयस्य सुप्रसिद्धस्य ग्रन्थस्य नाम किम्?

३. भारतीयैः बहुधा ज्ञातः स्काट्लण्ड्देशीयः साहित्यकारः कः?

४. तेन लिखितस्य ग्रन्थस्य नाम किम्?

५. प्रपञ्चे एव अतिप्राचीना भाषा का?

## उत्तराणि

### सः कः स्यात्?

तायुमानवर्वर्यः।

### सामान्यज्ञानम्

१. प्रायः क्रि.पू. ४६० कोटिवर्षेभ्यः पूर्वम्।
२. क्रि.पू. २०० कोटिवर्षेभ्यः पूर्वम्।
३. सूक्ष्मातिसूक्ष्मात् परमाणुतः आरभ्य महतो महत् नक्षत्रमण्डलं यावत् स्थितः अवकाशः।
४. 'वैकिंग्', १९७६ तमे वर्षे।
५. एकवर्षादपि अधिकं कालं यावत्।
६. २० कोटि कि.मी.।

### साहित्यज्ञानम्

१. जफ्र, चासर्। (१३४०-१४००)
२. दि काण्ट्रबरी टेल्स् इति।
३. सर् वाल्टर् स्काट्। (१७७२-१८३२)
४. ऐवान्हो इति।
५. संस्कृतम्।



# श्रीरामकृष्णपरमहंसः

(२)

कलकत्तानगरस्य दक्षिणभागे जाम्बजार् इत्यत्र राज्ञी रास्मोनी नामिका धनिका निवसति स्म। सा भगवद्भक्ता दानशीला च। विधवायाः तस्याः मनसि कदाचित् इच्छा उत्पन्ना यत् काशीक्षेत्रस्य दर्शनं प्राप्तव्यम् इति।

सा नौकया काशीक्षेत्रं प्रति प्रस्थितवती। लघ्वीभिः नौकाभिः तस्याः परिवारजनाः ताम् अनुसृतवन्तः। आदिनं प्रवासं कृत्वा ते सायङ्कालसमये दक्षिणेश्वरप्रदेशं प्राप्तवन्तः।





तस्यां रात्रौ राज्ञी स्वप्ने जगन्मातरं दृष्टवती। जगन्माता स्वप्ने तां सूचितवती यत् मम भक्तायाः भवत्याः काशीगमनं किमर्थं, भवती अत्रैव मन्निमित्तम् एकं मन्दिरं निर्मातु इति। राज्ञी प्रयाणं स्थगितवती। तत्रत्यं सुन्दरं परिसरं परिशीलितवती च।



राज्ञी तत्रैव उचितं स्थलं क्रीत्वा देवालयस्य निर्माणम् आरब्धवती। सा जगन्मातुः भक्ता खलु? अतः सा सङ्कल्पितवती यत् मन्दिरे कालिकामाता प्रधानदेवतारूपेण प्रतिष्ठापनीया इति।

कदाचित् राज्ञ्याः प्रतिनिधयः गदाधरस्य अग्रजं रामकुमारं दृष्ट्वा निवेदितवन्तः– "दक्षिणेश्वरमन्दिरे भवता देव्याः विग्रहस्य प्रतिष्ठापनं करणीयं, प्रधानार्चकदायित्वं निर्वोढव्यं च इति राज्ञी रास्मोनीदेवी अभिलषति" इति।





रामकुमारः एतं प्रस्तावम् अङ्गीकृतवान्। अनन्तरम् आगमशास्त्रोक्तक्रमेण आलये विग्रहः प्रतिष्ठापितः। प्रतिष्ठापन-महोत्सवस्य निमित्तं देशस्य विविधेभ्यः कोणेभ्यः विविधाः विद्वांसः, ज्येष्ठाः च आगतवन्तः।

अग्रजेन सह आगताय गदाधराय एषः प्रदेशः नितराम् अरोचत। गाम्भीर्येण प्रवहन्ती गङ्गानदी तस्मिन् स्फूर्तितरङ्गान् उत्पादितवती। प्रशान्ते नदीतीरे निर्जने अरण्ये वा उपविश्य गदाधरः तदा तदा ध्यानं कुर्वन् समयं यापयति स्म।





राज्ञ्याः रास्मोनीदेव्याः पुंसन्तानः नास्ति। तस्याः जामाता मथुरानाथः विद्यावान् विवेकी च। सः गदाधरस्य दर्शनमात्रेण एव ज्ञातवान् यत् एतस्मिन् जने विलक्षणं वैशिष्ट्यं किमपि अस्ति इति।

मथुरानाथः गदाधरं निवेदितवान् यत् भवान् देव्याः अर्चनकार्ये अग्रजस्य साहाय्यकः भवतु इति। एतत् कार्यं सन्तोषेण अङ्गीकृतवान् गदाधरः। कदाचित् सः परम्परागतं पूजाविधिं विस्मृत्य देव्याः विग्रहस्य पुरतः ध्याननिमग्नः सन् मौनम् उपविशति।





केषाञ्चित् वर्षाणाम् अनन्तरं रामनाथः व्याधिग्रस्तः सन् प्राणान् अत्यजत्। अनन्तरकाले गदाधरः एव कालीदेव्याः प्रधानार्चकः जातः। तेन क्रियमाणायां पूजायां, नीराजने, इतरत्र च अन्यः एव क्रमः दृश्यते स्म।

गदाधरस्य एतं विलक्षणं पूजाक्रमं दृष्ट्वा, केचन सन्तुष्टाः। किन्तु अन्ये केचन असन्तुष्टाः सन्तः एतं विषयम् आक्षेपपूर्वकं मथुरानाथं निवेदितवन्तः। विग्रहे दिव्यां शक्तिम् आवाहयहितुम् अपेक्षितं मनोबलं गदाधरस्य अस्ति इति जानन् मथुरानाथः तेषाम् आक्षेपम् उपेक्षितवान्।





एवं पूजां कुर्वतः गदाधरस्य मनसि कदाचित् इच्छा उत्पन्ना यत् कालीमाता प्रत्यक्षं द्रष्टव्या इति। सः कदाचित् एकाग्रचित्तः सन् प्रार्थितवान्– "मातः! यदि भवती दर्शनेन मां न अनुग्रहीष्यति तर्हि अहं भवत्याः पादमूले स्थितेन खड्गेन स्वशिरः कर्तयन् प्राणान् अर्पयिष्यामि" इति। अनन्तरक्षणे एव विद्युत्स्फुरणं जातम्। विग्रहस्य पुरतः कान्त्या विलसन्ती कालीमाता प्रत्यक्षा अभवत्।

–(अनुवर्तते)



# चोरग्रहणम्

भारतीपुरनामकस्य राज्यस्य राजा चित्रसेनः। तस्मिन् राज्ये रविरामः नाम कश्चन चोरः निवसति स्म। तेन राजधान्यां बहुषु गृहेषु चौर्यं कृतम् आसीत्। तथापि सः रक्षकभटानां दृष्टितः आत्मानं रक्षन् जीवति स्म।

कदाचित् रविरामः भित्तिभेदनं कृत्वा राजोद्योगिनः कस्यचित् गृहं प्रविष्टवान्। रविरामस्य तदनुयायिनां च दर्शनात् भीतः सः राजोद्योगी प्राणरक्षणार्थम् अमूल्यानि सर्वाणि वस्तूनि अर्पितवान्। रविरामः महता सन्तोषेण ततः निर्गतवान्।

ततः सप्ताहाभ्यन्तरे रविरामः भित्तिभेदनपूर्वकम् अन्यस्य वणिजः गृहं प्रविष्टवान्। छुरिकां प्रदर्शयन् वणिजं भायितवान्। 'एतस्य वणिजः गृहे अधिकं धनम्, अमूल्यानि आभरणानि च प्राप्येरन्' इति आलोचितवान् आसीत् रविरामः। किन्तु अत्र स्थितिः अन्या एव। वणिजः धनपेटिका रिक्ता दृश्यते! 'अद्य मम प्रयत्नः लाभकरः न जातः' इति निराशाम् अनुभवन् सः यानि वस्तूनि प्राप्तानि तानि ग्रन्थिरूपेण बद्ध्वा ततः निर्गतवान्।

एतदनन्तरं रविरामः कृषिकस्य कस्यचित् गृहे चौर्यं कृतवान्। तत्र तेन अमूल्यानि आभरणानि प्राप्तानि।

पुनः अल्पेषु एव दिनेषु सः अर्चकस्य गृहं चौर्यार्थं प्रविष्टवान्। तत्र अमूल्यानि वस्तूनि तु न आसन्। किन्तु रविरामः यानि वस्तूनि प्राप्तानि तानि न त्यक्तवान्। तानि स्वीकृत्य अनुचरैः सह ततः निर्गतवान्।

रविरामः कदाचित् एवं चोरितानि वस्तूनि परिशीलितवान्। एतेन सः ज्ञातवान् यत् राजोद्योगिनः गृहे यत् चौर्यं कृतं ततः प्राप्तानि वस्तूनि एव अधिकमूल्यकानि इति।

येषां गृहेषु रविरामेण चौर्यं कृतं तेषां



गृहाणां स्वामिनः चौर्यविषयं राजानं निवेदितवन्तः आसन्। किन्तु सः राजोद्योगी केवलं चौर्यविषयं राजानं न निवेदितवान् आसीत्। राजोद्योगिना किमर्थं तथा कृतम् इति न ज्ञातं रविरामेण।

मासद्वयस्य अनन्तरं रविरामः पुनरपि तस्य राजोद्योगिनः गृहे चौर्यं कृतवान्। पूर्वं यावन्ति अमूल्यवस्तूनि प्राप्तानि आसन् ततोऽपि अधिकानि वस्तूनि प्राप्तानि रविरामेण। सः वणिजः, कृषिकस्य, अर्चकस्य च गृहे अपि द्वितीयवारं चौर्यं कृतवान्। किन्तु तेषु गृहेषु विशेषतः किमपि न लब्धं तेन। रविरामः तर्कितवान् यत् एते त्रयः पूर्वं जातस्य चौर्यस्य आघातेन पीडिताः इतोऽपि स्वस्थाः न जाताः इति।

एतस्मिन् सन्दर्भे अपि वणिक्, कृषिकः, अर्चकश्च चौर्यं राजानं निवेदितवन्तः आसन्। राजोद्योगी तु यथापूर्वं मौनं स्थितवान् आसीत्। 'एवं तर्हि राजोद्योगिनः व्यवहारे अप्रामाणिकता काऽपि दृश्यते' इति निश्चितवान् रविरामः।

कदाचित् रविरामः कस्यचित् धनिकस्य गृहे चौर्यार्थं गतवान्। तत्र अजागरूकतावशात् सः धनिकस्य सेवकैः बद्धः अभवत्। तस्य सहचराः तु कथमपि ततः पलायितवन्तः।

सेवकैः बद्धः चोरः कुख्यातः रविरामः एव इति ज्ञात्वा धनिकः सेवकान् उक्तवान्– "राजभटैः अपि यत् कर्तुं न शक्तं तादृशं कार्यं कृतं भवद्भिः। साधु! एतम् अद्यैव राजभटाधीनं कुर्वन्तु। ते एतं राजसमीपं नेष्यन्ति। राजा एव अपराधानुगुणं दण्डनं विधास्यति" इति।

धनिकस्य सेवकाः रविरामं राजभटाधीनं कृतवन्तः। राजभटाः तं चोरं राज्ञः समीपं नीतवन्तः।

राजा प्रवृत्तं सर्वं ज्ञात्वा रविरामम् उक्तवान्– "भोः, महाबुद्धिमान् अपि चोरः कदाचित् वा गृह्यते एव इत्यत्र भवान् एव प्रमाणम्। प्रामाणिकतया चौर्यं यथावत् अङ्गीकृत्य चोरितानि वस्तूनि सर्वाणि अर्पयति चेत् दण्डविधानसन्दर्भे कृपा

प्रदर्श्येत। अन्यथा आजीवनं चित्रहिंसा अनुभोक्तव्या भवेत् भवता" इति।

तदा रविरामः उक्तवान्– "कथञ्चित् अहं बद्धः अस्मि। इतः परम् असत्यकथनेन किं प्रयोजनम्? चौर्येण मया यद्यत् प्राप्तं तत्सर्वं भवते समर्पयिष्यामि" इति।

अनन्तरं रविरामः चोरितानि वस्तूनि कुत्र स्थापितानि इति सूचितवान्। तदनुगुणं राजभटाः तानि वस्तूनि आनीतवन्तः। चोरः गृहीतः इति, चोरेण नीतानि वस्तूनि प्राप्तानि इति च वणिजा, कृषिकेण, अर्चकेण च ज्ञातम्। अतः ते झटिति आगत्य राजानं निवेदितवन्तः यत् अस्मदीयानि वस्तूनि अस्मभ्यं दापयतु कृपया इति।

राजा चोरम् आदिष्टवान्– "किं वस्तु कस्य इति निर्णीय विभागं करोतु" इति। चोरः रविरामः कृषिकस्य, वणिजः, अर्चकस्य, राजोद्योगिनः च वस्तूनि पृथक्-पृथक् संस्थाप्य राजोद्योगिनः वस्तूनि प्रदर्शयन् राजानं निवेदितवान्– "महाराज! एतानि वस्तूनि राजमार्गे दक्षिणान्ते निवसतः राजोद्योगिनः गृहात् चोरितानि मया" इति।

एतत् वचनं श्रुत्वा राजा आश्चर्यचकितः। सः आश्चर्येण उक्तवान्– "एतानि अमूल्यानि वस्तूनि राजोद्योगिनः गृहे! कथं सम्भवेत् एतत्? सामन्तराजस्य गृहे भवितुम् अर्हाणि एतानि। किन्तु भवान् वदति यत् राजोद्योगिनः गृहात् चोरितानि एतानि इति। अन्यच्च चौर्यविषये तेन राजोद्योगिना कदापि न निवेदितम्। कथं भवतः वचने विश्वसिमि



अहम्?" इति।

तदा रविरामः मन्दहासपूर्वकम् उक्तवान्– "महाराज! ममापि सन्देहः आसीत् – स्वगृहे जातस्य चौर्यस्य विषयम् एषः न्यायस्थानं किमर्थं न निवेदितवान् इति। अनन्तरं ज्ञातं यत् सः अद्वितीयः वञ्चकः इति। जनेभ्यः उत्कोचं स्वीकुर्वन् सः प्रभूतं धनं सङ्गृहीतवान्। ममापेक्षया श्रेष्ठः चोरः सः। स्वस्य अव्यवहारः प्रकटितः भवेत् इति आलोचयन् सः कमपि चौर्यं न निवेदितवान्" इति।

"मम आस्थाने उत्कोचग्राही! अहो आश्चर्यम्!" इति वदन् राजा भटद्वारा तं राजोद्योगिनं स्वसमीपम् आनायितवान्।

राज्ञा क्रोधेन यदा पृष्टं तदा सः राजोद्योगी स्वस्य अपराधम् अङ्गीकृतवान्। राजा तत्क्षणे एव तं कठोरकारागरवासेन दण्डितवान्।

अनन्तरं रविरामं पश्यन् पृष्टवान्– "भवत्कारणतः उत्कोचग्राही दण्डितः अभवत्। देशस्य कण्टकम् एकम् अपगतम्। अस्तु, भवन्तं केन दण्डेन दण्डयामि?" इति।

"महाराज! चौर्यं मम वृत्तिः आसीत्। अतः चौर्यं कृतम्। किन्तु अप्रामाणिकता कदापि न प्रदर्शिता। अन्यच्च अद्वितीयः उत्कोचग्राही मया प्रदर्शितः। अतः पुरस्कारेण अहम् अनुग्रहणीयः भवता। किन्तु भवान् दण्डनं चिन्तयन् अस्ति। एतत् तु अनुचितम्" इति उक्तवान् रविरामः।

एतत् श्रुत्वा मन्दहासपूर्वकम् उक्तवान् राजा– "सत्यं, पुरस्कारार्हः भवान्। अतः दण्डनात् मुक्तिः अनुगृहीता मया। इतः परं चौर्यं परित्यज्य सन्मार्गेण प्रवर्तनीयं भवता। भवतः अनुचराः अपि चौर्यवृत्तिं परित्यज्य परिश्रमेण कार्यं कृत्वा जीवनं यापयेयुः। पुनः कदाचित् चौर्यं कृतं चेत् भवन्तं शूलम् आरोपयिष्यामि" इति।

दण्डनात् मुक्तिं प्राप्य सन्मार्गे प्रवर्तनं सङ्कल्प्य सन्तोषेण ततः निर्गतः चोरः रविरामः।








इन्द्रस्य साहाय्यं प्राप्य सन्तुष्टः राहुः आत्मनि पुनरपि धैर्यं पूरयित्वा आञ्जनेयस्य समीपं गतवान्। आञ्जनेयः राहुम् एकवारं तीक्ष्णया दृष्ट्या दृष्टवान्। अनन्तरं तम् अपि फलं मन्यमानः ग्रहीतुम् अग्रे गतवान्। उग्ररूपेण आगच्छन्तम् आञ्जनेयं दृष्ट्वा नितरां भीतः राहुः ततः पलाय्य इन्द्रस्य समीपं गतवान्। "सः दुष्टः मां मारयितुम् आगच्छन् अस्ति। कृपया रक्षतु।अहं महता वेगेन ततः पलायितवान्। अतः अत्र आगन्तुं शक्तवान्। यदि अहं वेगेन धावनं न कुर्यां तर्हि सः माम् अमारयिष्यत् एव। इदानीं भवान् एव शरणं मम। देवदेव! भवता कृपया रक्षणीयः अहम्" इति दैन्येन इन्द्रं प्रार्थितवान् च।

"भीतिः मास्तु। तम् दुष्टं बालम् अहं दण्डयिष्यामि" इति वदन् इन्द्रः ऐरावतम् अग्रे प्रेरितवान्।

गाम्भीर्येण आगच्छन्तं गजं दृष्ट्वा आञ्जनेयः चिन्तितवान्– 'एतत् फलं श्वेतम् अस्ति। स्थूलम् अपि अस्ति। एतस्य खादनेन मम बुभुक्षा शान्ता भवेत्' इति। अतः सः ऐरावतस्य दिशि अग्रे गतवान्। आञ्जनेयं दृष्ट्वा ऐरावतः भीतः अभवत्। ततः पलायनम् अकरोत् च।

एतत् दृष्ट्वा कुपितः इन्द्रः आञ्जनेयम् उद्दिश्य वज्रायुधं क्षिप्तवान्। वज्रायुधप्रहारेण नितरां पीडितः आञ्जनेयः मूर्च्छितः सन् उदयाद्रेः उपरि पतितवान्।



वायुदेवः पुत्रस्य एतां दुर्गतिं दृष्ट्वा नितरां खिन्नः। कोपवशंगतः सः सञ्चारं परित्यज्य मौनं स्थितवान्। वायुदेवस्य एतस्य निर्णयस्य कारणतः समग्रः लोकः पीडितः अभवत्। इदानीं किं करणीयम् इति लोके कोऽपि न जानाति स्म।

अत्रान्तरे अञ्जनादेवी कुटीरं प्रत्यागतवती। अन्तः शय्यायां पुत्रः न आसीत्। अतः सा भीता सती उच्चैः रोदनं कर्तुम् आरब्धवती।

तां सान्त्वयन् केसरी उक्तवान्– "रोदनं मा करोतु। भवत्याः पुत्रः उदयन्तं सूर्यं फलं मन्यमानः तं ग्रहीतुं प्रयत्नं कृतवान्। राहुद्वारा एतं विषयं ज्ञात्वा कुपितः इन्द्रः एतम् उद्दिश्य वज्रायुधं क्षिप्तवान्। एतेन बालस्य हनुः भग्नः। सः उदयाचले अपतत्। इन्द्राय कुपितः वायुः सञ्चारं परित्यज्य मौनम् उपविष्टः अस्ति। एतया घटनया भवत्याः पुत्रस्य हितम् एव सेत्स्यति। अतः चिन्तां रोदनं वा मा करोतु" इति।

एतानि वचनानि श्रुत्वा अञ्जना किञ्चिदिव समाहिता अभवत्। सा रोदनं स्थगितवती।

रुष्टः वायुदेवः सञ्चारं परित्यक्तवान् इत्यतः सर्वे देवाः चिन्ताक्रान्ताः जाताः। ते ब्रह्मणः समीपं गत्वा उक्तवन्तः– "इन्द्रः कोपेन वज्रायुधप्रहारेण आञ्जनेयं मूर्च्छितं कृतवान्। एतेन कुपितः वायुः सञ्चारं परित्यक्तवान्। वायोः सञ्चारस्य अभावात् लोकः सङ्कटग्रस्तः जातः अस्ति। इदानीं भवान् एव शरणम्" इति।

ब्रह्मा हंसम् आरुह्य वायोः समीपं गत्वा तम् उक्तवान्– "वत्स! सर्वव्यापी भवान् सर्वेषां प्राणिनां प्राणभूतः अस्ति। एतादृशः भवान् रुष्टः सन् सञ्चारं परित्यजति चेत् लोकस्य का वा गतिः? किम् एतत् उचितम्?" इति।

आञ्जनेयः प्रत्युत्तरं किमपि न दत्तवान्। मूर्च्छितम् आञ्जनेयं ब्रह्मणः पादयोः पुरतः स्थापयित्वा नमस्कृत्य मौनं स्थितवान्। ब्रह्मा तं बालं हस्तेन स्पृष्टवान्। सः बालकः सचेतनः जातः।

एतेन वायोः दुःखम् अपगतम्। सः सन्तोषेण लोकसञ्चारार्थं निर्गतः। ब्रह्मा देवताः उद्दिश्य उक्तवान्– "एषः बालकः त्रीन् लोकान् अपि तोषयिष्यति। एषः शिवस्य अंशेन जातः। अतः वरदानेन एतम् अनुगृह्णीमः वयम्" इति।

'एषः वेदज्ञानं पूर्णतः प्राप्नोतु' इति भूमाता आञ्जनेयम् अनुगृहीतवती। जलतः अपायः यथा न आगच्छेत् तथा वरं दत्तवान् वरुणः। मृत्युतः वार्धक्यतः न मुक्तिः अनुगृहीता यमराजेन। युद्धे सदा जयः एव यथा स्यात् तथा वरः दत्तः कुबेरेण। विश्वकर्मा कनककुण्डलं दत्तवान्।



इन्द्रः आञ्जनेयं हनूमान् इति नाम्ना आह्वयन्, वज्रायुधतः अपायः यथा न स्यात् तथा वरं दत्तवान्। ब्रह्मा आञ्जनेयं चिरञ्जीवित्वेन अनुगृहीतवान्।

अन्ये अपि देवाः विविधैः वरैः आञ्जनेयम् अनुगृहीतवन्तः। देवैः विविधैः अपूर्वैः वरैः अनुगृहीतः आञ्जनेयः महाभाग्यशाली अभवत्।

अनन्तरं ब्रह्मा वायुदेवम् उक्तवान्– "भवतः एषः पुत्रः अपूर्वां कीर्तिं प्राप्स्यति। कदापि अपजयं न प्राप्स्यति। धैर्येण एषः पर्वतः इव अचलः स्थास्यति। अणिमादिसिद्धीः प्राप्य सिद्धपुरुषः भविष्यति। एतस्मिन् धैर्यं, शौर्यं, दयागुणः च विशेषतः भविष्यति। एषः भाविजीवने बहूनि अपूर्वाणि कार्याणि करिष्यति" इति।

फलभ्रान्त्या सूर्यम् एव खादितुम् उद्युक्तस्य आञ्जनेयस्य सामर्थ्यातिशयं बहुधा प्रशंसन्तः देवाः ततः निर्गतवन्तः।

वायुदेवः आञ्जनेयम् उन्नीय नीत्वा अञ्जनायै अर्पितवान्। पुत्रप्राप्त्या अञ्जना अतीव सन्तुष्टा। तस्याः नेत्राभ्याम् आनन्दाश्रूणि आगतानि।

समीपे निवसन्तः, मुनयः आश्चर्यपूर्वकं परस्परं वार्तालापं कुर्वन्ति स्म– "सूर्यस्य समीपं गमनम् एव असाध्यं, यतः तादृशः उग्रः तापः तस्य। एवं स्थिते कश्चन बालः फलभ्रान्त्या सूर्यं ग्रहीतुं शक्तवान् इति तु आश्चर्याय एव" इति।



देवाः विविधैः अपूर्वैः वरैः पुत्रम् अनुगृहीतवन्तः इति श्रुत्वा केसरी अपि सन्तुष्टः।

हनूमान् दिने दिने वर्धते। सः ज्ञानी सन् अपि औद्धत्येन व्यवहरति स्म। मातापितरौ तं सदा बोधयतः स्म यत् दुर्बलानां सज्जनानां च पीडनं सर्वथा अनुचितम् इति। किन्तु हनूमान् तु तयोः वचनं तृणीकृत्य व्यवहरति। स्वेच्छया सर्वत्र अटन् दिनानि यापयति।

मुनयः चिन्तयन्ति स्म यत् लोककल्याणार्थं जन्म प्राप्तवान् एषः कथम् एवम् औद्धत्येन व्यवहरति? इति। किन्तु ते तस्य औद्धत्यपूर्णं व्यवहारं सोढुम् अपि न शक्नुवन्ति। ब्रह्मणः अनुग्रहस्य कारणतः, तं शापदानात् निग्रहीतुम् अपि न शक्नुवन्ति स्म ते। 'महत्या शक्त्या युक्तस्य एतस्य निग्रहणं न कृतं चेत् अनौचित्यं स्यात्' इति चिन्तयन्तः ते हनूमान् स्वशक्तिं स्वयं यथा न जानीयात् तथा कृतवन्तः।

एतस्य परिणामतः हनूमान् अकस्मात् परमसात्त्विकः जातः। पुत्रे जातम् एतत् महत् परिवर्तनं दृष्ट्वा अञ्जना केसरी च नितरां सन्तुष्टौ।

कदाचित् अञ्जना हनूमन्तम् उक्तवती— "वत्स! किष्किन्धायां वालिसुग्रीवनामकौ सहोदरौ निवसतः। मम माता अहल्या एव तयोः माता। अतः तौ भवतः मातुलौ। भवान् किष्किन्धां गत्वा सुग्रीवेण सह निवसतु। यदि केनापि कारणेन वालिसुग्रीवयोः मध्ये विवादः भवेत् तर्हि भवता कदापि वालिनः मारणार्थं प्रयत्नः न करणीयः" इति।

मातरं भक्त्या नमस्कृत्य तस्याः आशीर्वादं प्राप्य ततः निर्गत्य हनूमान् किष्किन्धां प्राप्तवान्। वाली सुग्रीवः च तं महत्या प्रीत्या स्वागतीकृतवन्तौ। हनूमान् सुग्रीवस्य मन्त्री जातः।

कदाचित् हनूमतः इच्छा जाता यत् वेदाः शास्त्राणि च अध्येतव्यानि इति। अतः सः स्नानादिकं समाप्य सूर्योदयसमये आकाशमार्गेण गतवान्। सूर्यस्य पुरतः स्थित्वा तं विनयेन नमस्कृतवान्।

एतेन प्रसन्नः सूर्यः पृष्टवान्— "भवतः

इच्छा सफला भवतु। वत्स! केन उद्देशेन भवान् अत्र आगतः?" इति।

"वेदाः शास्त्राणि च अध्येतव्यानि इति इच्छया अहम् अत्र आगतः" इति उक्तवान् हनूमान्।

"एवं वा? वेदशास्त्रादीनां पाठने मम महती इच्छा अस्ति एव। किन्तु अहं पर्वतानां मध्ये निरन्तरं सञ्चारं कुर्वन् भवामि। एवं स्थिते भवान् कथं वा मत्तः अध्ययनं कुर्यात्?" इति पृष्टवान् सूर्यः।

तदा हनूमान् पृष्टवान्– "महात्मन्! उदयाचलास्ताचलयोः उपरि पादं स्थापयित्वा भक्तः विद्यां ग्रहीष्यामि, उत भवन्तं निरन्तरम् अनुसरिष्यामि?" इति।



हनूमतः एतत् उत्तरं श्रुत्वा सूर्यः नितरां सन्तुष्टः। सः हनूमन्तम् उक्तवान्– "वत्स! भवादृशः जनः मया अन्यः न दृष्टः। भवान् उदयाचले अस्ताचले च एकैकं पादं स्थापयित्वा उत्तिष्ठतु। भवतः एतत् अपूर्वं सामर्थ्यं दृष्ट्वा सर्वे देवादयः सन्तुष्टाः भवन्तु नाम" इति।

"यथाज्ञापयति भवान्" इति उक्त्वा हनूमान् सूर्यं प्रदक्षिणीकृत्य स्वशरीरं वर्धितवान्। चतसृषु दिक्षु समग्रं प्रदेशम् अभिव्याप्य स्थितवान्। औन्नत्येन नक्षत्रलोकं प्राप्तवान्।

हनुमतः एतत् रूपं दृष्ट्वा ब्रह्मदेवः आश्चर्यचकितः। सर्वे मुनयः देवाः च हनूमन्तं गौरवेण नमस्कृतवन्तः।

सूर्यदेवस्य आश्चर्यं तु वर्णनातीतम्। सूर्यः हनूमन्तम् उक्तवान्– "भवान् रुद्रस्य अवतारभूतः अस्ति। मम कीर्तिं वर्धयितुम् एव भवान् मम समीपम् आगतवान्। अहं भवन्तं किं वा पाठयेयम्?" इति।

हनूमान् विनयेन उक्तवान्– "महात्मन्! किं वदति भवान्? भवान् वेदस्य मूलपुरुषः। अतः भवन्तं विनयेन प्रार्थयामि यत् मां शिष्यत्वेन स्वीकृत्य त्रीन् वेदान् शास्त्राणि च अध्यापयतु इति" इति। अनन्तरं सः पूर्वतनं सामान्यं रूपं धृत्वा सूर्यस्य रथस्य पुरतः विनयेन स्थितवान्।

सूर्यः प्रतिघण्टं सप्ततिसहस्राधिकानि नव



लक्षाणि योजनानि यावत् सञ्चरति। तेनैव वेगेन सञ्चरन् हनूमान् सूर्यस्य अभिमुखं स्थित्वा वेदान्, स्मृतीः, सर्वाणि शास्त्राणि च अधीतवान्।

एवम् अध्ययनं समाप्य हनूमान् सूर्यं श्रद्धया नमस्कृत्य किष्किन्धां प्रत्यागतवान्। सुग्रीवम् अध्ययनविषयं विस्तरेण निवेदितवान् च। एतत्सर्वं श्रुतवतः सुग्रीवस्य हनूमद्विषयिणी प्रीतिः प्रवृद्धा।

वाली सुग्रीवः च महत्या आत्मीयतया व्यवहरतः। तयोः पारस्परिकं प्रेम आदर्शप्रायम् आसीत्। वालिसुग्रीवयोः पिता ऋक्षरजाः परलोकं गतः इत्यतः वाली कपिराज्यस्य राजा जातः। सुग्रीवश्च युवराजः जातः।

वालिनः बलं पराक्रमं च अद्वितीयम् आसीत्। तेन सह युद्धं कृत्वा कोऽपि जयं प्राप्तुं न अर्हति स्म। सर्वान् राज्ञः जित्वा विजयगर्वेण उन्मत्तः रावणः कदाचित् किष्किन्धाम् आगत्य वालिनं युद्धार्थम् आहूतवान्। युद्धार्थम् आगतः वाली रावणं सम्यक् प्रहृतवान्। पराजितः रावणः वालिनः मित्रतां प्राप्य ततः निर्गतवान्।

एतदनन्तरं कदाचित् दुन्दुभिः नाम राक्षसः वालिनं युद्धार्थम् आहूतवान्। गर्वितः दुन्दुभिः हिमवन्तं निन्दन् युद्धार्थम् आहूतवान् आसीत्। तदा हिमवान् तम् उक्तवान् आसीत्— "भवता सह युद्धं कर्तुं मम सामर्थ्यं नास्ति। भवत्सदृशः वाली इति कश्चित् किष्किन्धायाम् अस्ति। यदि इच्छति तर्हि तं युद्धार्थम् आह्वातुम् अर्हति" इति।

हिमवतः वचनेन प्रेरितः दुन्दुभिः मधुवनम् आगत्य वनं नाशयितुम् उद्युक्तः। वालिनम् अवाच्यैः शब्दैः निन्दितवान् सः। दुन्दुभेः आह्वानानुसारं वाली युद्धार्थम् आगतवान्। युद्धे तं मारयित्वा तस्य शरीरं विच्छिद्य सर्वासु दिक्षु क्षिप्तवान्। एवं क्षिप्तः शरीरभागः ऋष्यमूकपर्वते पतितः। केचन रक्तबिन्दवः तत्र तपः आचरतः मुनेः मतङ्गस्य उपरि पतिताः। एतेन क्रुद्धः मतङ्गः शापं दत्तवान् यत् वाली ऋष्यमूकपर्वतस्य उपरि पदं स्थापयति चेत् क्षणाभ्यन्तरे तस्य मरणं भविष्यति इति।

अनन्तरकाले दुन्दुभेः पुत्रः मायावी वालिनः शत्रुः जातः। वालिना दुन्दुभिः मारितः आसीत् इति तु एकं कारणम्। अपरं कारणं कश्चन स्त्रीसम्बन्धी व्यवहारः।

कदाचित् मायावी मध्यरात्रसमये किष्किन्धाम् आगत्य वालिनं कठोरैः शब्दैः निन्दन् युद्धार्थम् आहूतवान्। तदा वाली निद्रातः जागरितः सन् युद्धार्थं प्रस्थितवान् एव। सः शत्रोः गर्वप्रदर्शनं न सहते स्म। सुग्रीवः तारा च 'एतस्मिन् समये युद्धार्थं गमनं मास्तु' इति उक्तवन्तौ। किन्तु वाली कस्यापि वचनं न श्रुतवान्।

सुग्रीवः वालिनं युद्धनिर्गमनात् निवारयितुं न शक्तवान्। अतः सः स्वयं वालिनम् अनुसृतवान्। एतौ उभौ बलशालिनौ सहोदरौ दृष्ट्वा मायावी भीत्या ततः पलायितवान्। वाली सुग्रीवश्च उत्साहेन तम् अनुसृतवन्तौ।

मायावी तौ सुदूरं नीतवान्। अन्ते पर्वतस्थां काञ्चित् गुहां प्रविष्टवान्। तस्याः गुहायाः द्वारं तृणगुल्मादिभिः आवृतम् आसीत्।

"यावत् अहं मायाविनं मारयित्वा न प्रत्यागमिष्यामि तावत् भवान् अत्रैव मां प्रतीक्षमाणः तिष्ठतु" इति सुग्रीवम् उक्त्वा वाली गुहां प्रविष्टवान्।

बहोः कालात् अनन्तरम् अपि वाली न प्रत्यागतः। तदा सुग्रीवः चिन्तितवान् यत् वाली अपायात् ग्रस्तः जातः स्यात् इति। अत्रान्तरे गुहातः रक्तधारा प्रवाहरूपेण निर्गता। उच्चैः आक्रन्दनम् अपि गुहातः आगतम्। एतत्सर्वं दृष्ट्वा सुग्रीवः निश्चितवान् यत् अग्रजः वाली मृतः एव इति।

सः महत् दुःखम् अनुभवन् गुहाद्वारं विशालशिलया पिधाय, अग्रजम् उद्दिश्य निवापाञ्जलिं समर्प्य शोकाकुलः सन् किष्किन्धां प्रत्यागतवान्।

वालिनः गतिं श्रुत्वा सर्वे वानराः दुःखिताः अभवन्। ते ऐकमत्येन सुग्रीवं सिंहासने उपवेशितवन्तः। —(अनुवर्तते)





# वरप्रियाविवाहः

गङ्गावतीनामके ग्रामे सूर्यः नाम कृषिकः आसीत्। तस्य पत्न्याः नाम रमामणिः इति तयोः दम्पत्योः द्वौ पुत्रौ एका पुत्री च सन्ति। पुत्र्याः नाम वरप्रिया इति। वरप्रिया यदा प्राप्तवयस्का जाता तदा मातापितरौ तस्याः विवाहार्थं प्रयत्नं कृतवन्तौ। किन्तु योग्यः बरः ताभ्यां न प्राप्तः एव। एवम् एव दिनानि अतीतानि।

वरप्रिया आकारेण स्थूला कटुभाषिणी च। तस्याः वचनप्रहारतः न केवलं मातापितरौ, अपि तु प्रतिवेशिनः अपि भीताः भवन्ति। अतः तस्याः कटुभाषिता समग्रे ग्रामे प्रसिद्धा आसीत्। 'यावत् सा स्वस्य स्थूलतां कटुभाषितां च न न्यूनीकरोति तावत् तस्याः विवाहः न भविष्यति' इति जनाः वदन्ति स्म। किन्तु एतादृशं वचनं वरप्रियायाः पुरतः वक्तुं कस्यापि धैर्यं नास्ति।

कदाचित् वरप्रियायाः मातृष्वसा कस्यापि कार्यस्य निमित्तं गङ्गावतीम् आगतवती। वरप्रियायाः गृहे एव तस्याः वासः। वरप्रियायाः विवाहः समस्याजनकः अस्ति इति ज्ञात्वा सा वरप्रियां बोधितवती यत् शरीरस्य स्थौल्यं वचनस्य कटुत्वं च न्यूनीकरणीयम् इति।

एतं हितोपदेशं श्रुत्वा नितरां क्रुद्धा वरप्रिया – "मां हितम् उपदेष्टुं कः अधिकारः भवत्याः? किम् अन्नदानादिना मां पोषितवती वा भवती? न खलु? यत् इच्छामि तत् खादामि। मम पिता तु आवश्यकं धनं सम्पादयति। एतेन भवत्याः का हानिः, येन भवती मां मम प्रवृत्तितः निवारयेत्? विवाहः मम ललाटे लिखितः अस्ति चेत् काले भविष्यति एव। भवत्याः का चिन्ता तत्र? यदर्थं आगतं तत् कार्यं समाप्य मौनं



प्रतिगच्छतु भवती। अनपेक्षिते विषये चञ्चूप्रवेशः मास्तु'' इति सम्यक् निन्दितवती।

अन्ये अपि द्वित्राः बान्धवाः वरप्रियां हितं बोधयितुम् उद्युक्ताः, वरप्रियायाः कटुवचनैः ताडिताः सन्तः मौनं प्रतिगतवन्तः। अतः इदानीं तां हितम् उपदेष्टुं कोऽपि उद्युक्तः न भवति स्म।

तस्याः सहोदरौ दीर्घकालं यावत् 'अनुजायाः विवाहः भवेत्' इति प्रतीक्षां कृतवन्तौ। अन्ते खिन्नौ तौ योग्यां वधूं परिणीतवन्तौ।

वरप्रियायाः मातापितरौ इदानीं वार्धक्ये स्तः। मरणात् पूर्वं पुत्र्याः विवाहः द्रष्टव्यः इति तयोः इच्छा। किन्तु वरप्रियायाः विवाहः तु गगनकुसुमायते।

वरप्रियायाः भ्रातृपत्नीभ्यां एतस्याः स्वभावः न अरोचत। ते वरप्रियां हितम् उपदेष्टुं प्रयत्नं कृतवत्यौ। तदा वरप्रिया ते निन्दितवती। ते च प्रतिनिन्दनं कृतवत्यौ। एवं गृहे कलहस्य आरम्भः जातः। 'भातृपत्न्यौ न सामान्ये' इति ज्ञातवती वरप्रिया। अतः सा प्रतिदिनं गृहात् निर्गत्य ग्रामसीमायां स्थितस्य कासारस्य तीरे आन्दोलिकां निर्माय क्रीडन्ती समयं यापयति। सायङ्काले कृषिक्षेत्रे कार्यं समाप्य प्रत्यागतौ अग्रजौ एतां प्रतिदिनं मधुरैः वचनैः सान्त्वयित्वा गृहं नयतः।

कदाचित् वरप्रिया भातृजायया सह कलहं कृत्वा खेदेन कासारतीरं प्रति प्रस्थितवती। सायम्पर्यन्तम् आहारं विना स्थातुं न शक्यते खलु? अतः सा प्रस्थानसमये किञ्चित् धनं स्वीकृतवती। मार्गे आपणतः खाद्यानि क्रीतवती। तानि आञ्चले बद्ध्वा सन्तोषेण कासारतीरं गतवती च। तत्र गता सा दृष्टवती यत् काचित् अपरिचिता एतया निर्मितायाम् आन्दोलिकायां सुखेन उपविश्य क्रीडन्ती अस्ति इति। एतत् दृष्टवत्याः वरप्रियायाः कोपः नितरां प्रवृद्धः। सा क्रोधेन तस्याः समीपं गत्वा– "अये दुष्टे, का भवती? मम आन्दोलिकायाम् उपविशन्त्याः भवत्याः कियत् धाष्ट्यम्?'' इति कठोरेण स्वरेण तर्जितवती। तां हस्तेन गृहीत्वा आकृष्टवती

च।

सा अपरिचिता तु आनन्देन क्रीडन्ती आसीत्। वरप्रियायाः आकर्षणकारणतः तर्जनकारणतः च दिग्भ्रान्ता सा आक्रोशनं कुर्वती अदृश्या अभवत्।

एतत् दृष्ट्वा क्रुद्धा वरप्रिया– "अये दुष्टे, का भवती? यदि धैर्यं स्यात् तर्हि मम पुरतः तिष्ठतु। भवती पिशाची, शाकिनी, डाकिनी, देवता वा स्यात् नाम। मम तु न काऽपि भीतिः। कस्याऽपि मन्त्रज्ञस्य साहाय्यं विनैव भवतीं वृक्षमूले बद्धुं समर्था अहम्। भवती इतः पलायते चेदपि अहं तु मौनं न स्थास्यामि। मन्दिरेषु अरण्येषु च अन्विष्य भवतीं कदाचित् वा ग्रहीष्यामि एव" इति गर्जितवती।

अदृश्यतां गता सा अपरिचिता वरप्रियायाः पुरतः प्रत्यक्षीभूय– "अहं वनदेवता। समीपस्थे अरण्ये मम वासः। एतेन मार्गेण गच्छन्ती अहम् आन्दोलिकां दृष्टवती। तस्याम् उपविश्य क्रीडितवती च। उच्चैः वदन्ती भवती मम उपस्थितिं सर्वत्र मा प्रकटयतु कृपया। मम स्थितिः ज्ञाता चेत् सर्वे मम समीपम् आगत्य मां पीडयेयुः" इति उक्तवती।

तदा वरप्रिया शान्तेन स्वरेण उक्तवती– "अस्तु, भवत्याः स्थितिं कमपि न निवेदयामि। किन्तु प्रत्युपकाररूपेण भवत्या वरः कश्चन दातव्यः। अचिरात् एव मम



परिणयः यथा भवेत् तथा वरेण अहम् अनुग्रहीतव्या" इति।

"तथास्तु। भवत्यै वरः दत्तः अस्ति मया" इति उक्त्वा सा वनदेवता ततः अदृश्या अभवत्।

वनदेवतायाः प्रभावात् इव भाति, अनन्तरदिने कश्चन सुन्दरः युवकः शय्या-पेटिकादिभिः सह वरप्रियायाः गृहम् आगतवान्। तत्समये वरप्रिया गृहस्य पुरतः उपविश्य सुखेन किमपि खादन्ती आसीत्। तां पृष्टवान् सः आगन्तुकः युवकः– "अत्र वासार्थम् एकः प्रकोष्ठः प्राप्येत वा?" इति।

अत्रान्तरे वरप्रियायाः अग्रजौ एतस्य वचनं श्रुत्वा बहिः आगतवन्तौ। आगन्तुकस्य



नाम-कुलादिकम् आगमनकारणादिकं च पृष्टवन्तौ।

तस्य आगन्तुकस्य नाम चलपतिः इति। तस्य मातापितरौ बान्धवाः वा न सन्ति। सः अविवाहितः अपि। तद्ग्रामीणशालायां नूतनतया नियुक्तः अस्ति सः।

'एषः अस्माकं गृहे निवसति चेत् लाभः भवेत्' इति निश्चित्य तौ सहोदरौ भाटकार्थं प्रकोष्ठं दातुं सिद्धौ जातौ। तत्क्षणे एव एकं प्रकोष्ठं स्वच्छीकृत्य तस्य वासार्थं व्यवस्थां कृतवन्तौ।

चलपतिः प्रतिदिनं प्रातः उत्थाय स्नानादिकं समाप्य पाकं कृत्वा भुक्त्वा विद्यालयं गच्छति। सायं प्रकोष्ठं प्रत्यागच्छति च। गमनागमनसमये वरप्रियायाः व्यवहारम् आसक्त्या पश्यति सः।

कानिचन दिनानि अतीतानि। कदाचित् चलपतिः वरप्रियायाः अग्रजौ उक्तवान्– "अहं वरप्रियां परिणेतुम् इच्छामि। किन्तु मम कश्चन नियमः अस्ति। भाविनी पत्नी पाककलायां निपुणा स्यात् इति मम अपेक्षा। बहुभ्यः वर्षेभ्यः अहं स्वयंपाकं कृत्वा दिनानि यापयन् अस्मि। एतेन नितरां खिन्नः अपि अस्मि। अतः पाककलायां निपुणा एव परिणेतव्या इति निश्चितवान् अस्मि" इति।

चलपतेः एतत् वचनं श्रुत्वा अग्रजौ नितरां सन्तुष्टौ। तौ एतां वार्तां गृहसदस्यान् सर्वान् निवेदितवन्तौ। वरप्रियां निवेदितवन्तौ यत् 'श्वः भवत्या श्रद्धया पाकः करणीयः इति। 'तस्याः साहाय्यार्थं कयापि न गन्तव्यम्' इति सूचितवान् आसीत् चलपतिः।

वरप्रिया पाककार्यं कुर्वती आलोचितवती– 'वनदेवतायाः अनुग्रहस्य कारणतः चलपतिः मां परिणेष्यति इत्यत्र संशयः एव नास्ति। यदि अहम् अद्य उत्तमं पाकं कुर्यां तर्हि विवाहानन्तरम् आजीवनं पाकः एव करणीयः भवेत्। अद्य अरुचिकरः पाकः सज्जीकृतः चेत् भाविनि जीवने सुखं स्यात्' इति। अतः सा बुद्ध्या लवणादिकम् अधिकं संयोज्य पाकस्य रुचिं नाशितवती।

चलपतिप्रभृतयः सर्वे भोजनार्थम् उपविष्टवन्तः। तैः कवलः मुखे स्थापितः।

सर्वेषां मुखं वक्रं जातम्। तत् खादितुम् अशक्तः एकैकः अपि मौनम् उत्थाय गतवान्। गृहसदस्याः वरप्रियां सम्यक् तर्जितवन्तः। "अहं यथा जानामि तथा पाकं कृतवती। यथामति कटु-लवणादिकं योजितवती। रुचिः नष्टा चेत् अहं किं वा कुर्याम्?" इति उक्तवती वरप्रिया।

अनन्तरदिने सर्वेषाम् उत्थानात् पूर्वं चलपतिः सर्वैः स्ववस्तुभिः सह प्रकोष्ठात् कुत्रापि निर्गतः आसीत्। प्रकोष्ठे एका चिटिका स्थापिता आसीत्। चिटिकायां लिखितम् आसीत् यत् – वरप्रियया क्रियमाणं पाकम् आजीवनं भोक्तुं मम धैर्यं नास्ति। स्वस्वभावं न परिवर्तयति चेत् जगदीश्वरस्य अनुग्रहेण अपि वरप्रियायाः विवाहः न भविष्यति इति।

एतत् पठित्वा सर्वे खिन्नाः। वरप्रिया अपि नितरां खिन्ना। वनदेवतायाः अनुग्रहः एवं व्यर्थः भवेत् इति तया न तर्कितम् आसीत्। एतस्याः घटनायाः अनन्तरं सर्वे वरप्रियाम् उपेक्षया द्रष्टुम् आरब्धवन्तः। वरप्रिया वनदेवतायाः अन्वेषणं सर्वत्र कृतवती। किन्तु तया वनदेवता कुत्रापि न दृष्टा।

इदानीं वरप्रियायाः व्यवहारे परिवर्तनं दृश्यते। सा भ्रातृपत्न्योः कार्येषु साहाय्यं करोति। मृदुभिः वचनैः व्यवहरति च। प्रतिदिनं कार्यं क्रियते इत्यतः तस्याः स्थूलता अपि क्रमशः अपगता।

अत्रान्तरे पार्श्वग्रामीणस्य धनिककृषिकस्य पुत्रः कुत्रापि वरप्रियां दृष्टवान्। अनुरक्तः अभवत् च। ततः अल्पे एव काले सः पार्श्वग्रामस्थः धनिककृषिकः 'वरप्रियां मम पुत्राय वधूरूपेण यच्छन्तु' इति प्रार्थितवान्। परस्परानुमतेः अनन्तरं मुहूर्तः निश्चितः। शुभे मुहूर्ते वरप्रियायाः विवाहः सवैभवं सम्पन्नः च।

वनदेवतायाः अनुग्रहस्य कारणतः मयि विवेकं जागरयितुं चलपतिः आगतः आसीत् इति, तेनैव कारणेन मम विवाहः सम्पन्नः इति च चिन्तितवती वरप्रिया।






# महाराजस्य मार्जारः

मिसारनामके नगरे मोहम्मदनामकः कश्चन वणिक् निवसति स्म। कदाचित् सः विक्रयणयोग्यानि वस्तूनि स्वीकृत्य सेवकैः सह वाणिज्यार्थं नगरात् प्रस्थितवान्। केषाञ्चित् मासानाम् अनन्तरं सः एकं विशालं नगरं प्राप्तवान्।

'एतस्मिन् नगरे कानिचन दिनानि सुखेन यापनीयानि' इति निश्चित्य सः कस्याञ्चित् धर्मशालायां स्ववसतिं कल्पितवान्।

एतस्मिन् सन्दर्भे कश्चन वणिक् मोहम्मदस्य समीपम् आगत्य उक्तवान्– "मित्र! एतस्य नगरस्य सम्प्रदायः यत् एतत् नगरम् आगतः वणिक् महाराजाय योग्यम् उपायनं समर्पयेत् इति। यः उपायनानि समर्पयति तं चतुरङ्गक्रीडार्थम् आह्वयति महाराजः" इति।

महाराजः द्रष्टव्यः इति इच्छा किञ्चिदपि नास्ति मोहम्मदस्य। तथापि सम्प्रदायस्य तिरस्कारः अपराधाय भवेत् इति भावयन् सः अमूल्यैः कैश्चित् वस्तुभिः सह महाराजस्य समीपं गत्वा तानि अर्पितवान्।

उपायनानि प्राप्य राजा सन्तुष्टः जातः। सः वणिजं वाणिज्यं कथं प्रचलति इत्यादिकं पृष्टवान्। अन्ते सः वणिजं सूचितवान्– "अद्य रात्रौ भवान् मम प्रासादम् आगच्छतु। आवां चतुरङ्गं क्रीडिष्यावः" इति।

रात्रौ वणिक् महाराजस्य प्रासादं गतवान्। महाराजः तं स्वस्य पुरतः उपवेशितवान्। उक्तवान् च– "क्रीडारम्भतः पूर्वं भवता मम एकः नियमः ज्ञातव्यः। मम समीपे एकः मार्जारः अस्ति। सः स्वपुच्छस्य उपरि सप्त दीपान् वहन् मम पार्श्वे उपविशति। यावत् अस्माकं क्रीडा प्रचलिष्यति तावत् एषः मार्जारः सप्त दीपान् वहन् निश्चलम्

उपविशति चेत् भवता स्वस्य समग्रा सम्पत्तिः मह्यम् अर्पणीया। अहं च भवन्तं कारागारे स्थापयिष्यामि। मार्जारस्य कम्पनकारणतः एकः दीपः पतति चेदपि अहं पराजयम् अङ्गीकरिष्यामि। स्वस्य इच्छायाः अनुगुणं मां दण्डयितुम् अर्हति भवान्'' इति।

वराकः मोहम्मदः किं वा उत्तरं वदेत्? सः मनसि एव स्वस्य दुरदृष्टं निन्दन् क्रीडार्थं सिद्धः जातः।

राज्ञः सेवकैः मार्जारः आनीतः। तस्य पुच्छस्य उपरि सप्त दीपाः स्थापिताः, ज्वालिताः च। अनन्तरं राजा मोहम्मदः च क्रीडाम् आरब्धवन्तौ।

त्रीणि दिनानि अतीतानि। तथापि मार्जारः किञ्चिदपि विचलितः न जातः। तस्य पुच्छस्य उपरि स्थापिताः दीपाः निरन्तरं ज्वलन्तः आसन्। इदानीं मोहम्मदः अनिवार्यतया स्वस्य पराजयम् अङ्गीकृतवान्। राजा मोहम्मदं कारागारे स्थापितवान्। धर्मशालायां स्थितानि मोहम्मदस्य सर्वाणि वस्तूनि सम्पत्तिः च राज्ञः अधीनानि जातानि।

मोहम्मदस्य पत्नी जरीना तु दिनानि गणयन्ती पत्युः प्रतीक्षां कुर्वती आसीत्। केषाञ्चित् दिनानाम् अनन्तरं मोहम्मदस्य एकः सेवकः प्रत्यागतः। सः तस्मिन् नगरे यद्यत् प्रवृत्तं तत्सर्वं विस्तरेण निवेदितवान्।

सर्वं शान्ततया श्रुत्वा जरीना



किञ्चित्कालं चिन्तनं कृतवती। केनापि उपायेन पतिः बन्धनात् मोचनीयः इति निश्चितवती सा। सा सेवकानां द्वारा कांश्चन मूषकान् सङ्गृह्य पेटिकायां रक्षितवती। अनन्तरं पुरुषवेषं धृत्वा, किञ्चित् सुवर्णं स्वीकृत्य, सेवकैः सह महाराजस्य नगरं प्रति प्रस्थितवती।

महाराजस्य नगरे कस्याञ्चित् धर्मशालायां वसतिं कृतवती सा। अनन्तरं सुवर्णस्थालिकायाम् अमूल्यानि उपायनानि स्वीकृत्य महाराजस्य प्रासादं प्राप्तवती। वेषान्तरेण स्थितां तां पुरुषं भावितवान् राजा तया आनीतानि उपायनानि स्वीकृत्य चतुरङ्गक्रीडार्थं ताम् आहूतवान्। क्रीडायाः

नियमं सूचितवान् अपि।

जरीना महाराजश्च क्रीडार्थम् उपविष्टवन्तौ। मार्जारस्य पुच्छस्य उपरि सप्त दीपाः स्थापिताः। मार्जारः तु शिलामूर्तिः इव निश्चलतया तिष्ठति।

जरीना स्वसेवकान् सूचितवती आसीत् यत् क्रीडायाः आरम्भस्य अनन्तरं तदा तदा एकैकः मूषकः पेटिकातः बहिः आनीय प्रकोष्ठे प्रेषणीयः इति।

कोऽपि यथा न पश्येत् तथा जरीनायाः सेवकाः पार्श्वप्रकोष्ठे निलीय स्थितवन्तः। क्रीडारम्भानन्तरम् अल्पे एव काले ते एकं मूषकं क्रीडाप्रकोष्ठस्य अन्तः प्रेषितवन्तः। यदा मूषकः पुरतः आगतः तदा मार्जारस्य मनसि तीव्रा इच्छा जाता यत् मूषकः ग्रहीतव्यः एव इति। किन्तु महाराजः तीक्ष्णया दृष्ट्या पश्यन् अस्तीत्यतः सः निश्चलम् अतिष्ठत्।

पुनः किञ्चित्कालस्य अनन्तरं जरीनायाः सेवकाः अपरं मूषकं प्रकोष्ठस्य अन्तः प्रेषितवन्तः। पुनः अल्पे काले द्वित्राः मूषकाः प्रेषिताः। क्रीडाप्रकोष्ठम् आगताः ते मार्जारं दृष्ट्वा नितरां भीताः। भीत्या ते इतस्ततः धावितवन्तः। बहून् मूषकान् दृष्टवतः मार्जारस्य मनः नितरां चञ्चलं जातम्। इच्छां निग्रहीतुम् अशक्तः सः स्वस्थानात् उत्थाय मूषकग्रहणार्थम् अधावत्। तस्य पुच्छस्य उपरि स्थापिताः दीपाः पतिताः।

तत्क्षणे एव प्रकोष्ठस्य अन्तः आगताः जरीनायाः सेवकाः महाराजं ताडयितुम् आरब्धवन्तः। महाराजः उच्चैः आक्रोशनं कृतवान्। किन्तु कोऽपि सेवकः तस्य रक्षणार्थम् अग्रे न आगतः। यतः राजा तान् बहुधा पीडितवान् आसीत्। अतः ते सर्वे राजानं तीव्रं द्विषन्ति स्म।

जरीना महाराजं कारागारे स्थापितवती। कारागारे स्थितं पतिम् इतरान् वणिजः च बन्धमुक्तान् कृतवती। अनन्तरं महाराजस्य ऐश्वर्यं स्वीकृत्य पत्या सह स्वनगरं गतवती सा।





# युक्तिः प्रतियुक्तिः च

हरिहरः उर्वारुकवणिक्। उर्वारुकगोणीं शिरसि स्थापयित्वा मार्गे मार्गे अटन् विक्रयणं करोति सः। कदाचित् अलसः कार्यरहितः भूषणः नाम कश्चित् विविधैः असम्बद्धैः प्रश्नैः हरिहरं बहुधा पीडितवान्।

एतेन खिन्नः हरिहरः असमाधानेन उक्तवान्– "गच्छतु भोः। वृथा प्रश्नाः भवतः। क्रयणबुद्धिः सर्वथा नास्ति भवतः" इति।

एतत् श्रुतवतः भूषणस्य कोपः प्रवृद्धः। "अये, किं वदति भवान्? मां सम्यक् न जानाति भवान्। यदि अहं सङ्कल्पं कुर्यां तर्हि गोण्यां स्थितानि सर्वाणि उर्वारुकाणि क्षणमात्रेण खादेयम्" इति गर्वेण उक्तवान् भूषणः।

"भवादृशाः चत्वारः मिलित्वा प्रयत्नं कुर्वन्ति चेदपि सर्वाणि उर्वारुकाणि खादितुं न शक्नुवन्ति" इति उक्तवान् हरिहरः।

"अहम् एकः एव सर्वाणि खादामि, पश्यतु तावत्" इति दृढस्वरेण हरिहरम् उक्तवान् भूषणः।

"भवान् सर्वाणि खादति चेत् द्वारप्रवेशानर्हं लड्डुकं दास्यामि" इति उक्तवान् हरिहरः।

"तत् तु सर्वथा अशक्यम्। तादृशं लड्डुकं भवान् दास्यति चेत् अहं दश रूप्यकाणि दास्यामि। दातुं न शक्तं चेत् भवता दश रूप्यकाणि दातव्यानि" इति सूचितवान् भूषणः।

"एतत् अनुमतं मम" इति अङ्गीकारं सूचितवान् हरिहरः।

अत्रान्तरे तत्र बहवः सम्मिलिताः। तेषां सर्वेषां सम्मुखे भूषणः सर्वाणि उर्वारुकाणि दष्ट्वा किञ्चित् खादित्वा पार्श्वे क्षिप्तवान्।

"मया सर्वाणि खादितानि, पश्यतु" इति हरिहरम् उक्तवान् च।

"सर्वाणि समग्रतया खादनीयानि" इति कोपेन उक्तवान् हरिहरः।

"एतानि विक्रेतुं प्रयत्नं करोतु। तदा जनाः किं वदन्ति? एतानि अन्येन खादितानि इति। एवं खलु? अतः 'सर्वाणि खादामि' इति एतत् मम वचनं पालितवान् अस्मि अहम्। इदानीं द्वारप्रवेशानर्हं लड्डुकं ददातु मह्यम्" इति उक्तवान् भूषणः।

"भूषणस्य तर्कः युक्तः अस्ति। तेन स्ववचनं पालितम्" इति एकस्वरेण उक्तवन्तः जनाः। एतत् श्रुत्वा हरिहरः किञ्चित्कालं चिन्ताक्रान्तः जातः। अनन्तरं मनसि किमपि निश्चित्य सः मौनम् आपणं गतवान्। एकं गुडमयं लड्डुकं क्रीत्वा आनीय भूषणाय दत्तवान् च।

"एतत् एव वा द्वारप्रवेशानर्हं लड्डुकम्? एतावत् लघु?" इति उपहासपूर्वकम् उक्तवान् भूषणः।

"किम् उपहासेन? द्वारं किमपि प्रदर्शयतु। एतस्य द्वारप्रवेशानर्हतां तत्र प्रदर्शयिष्यामि" इति उक्तवान् हरिहरः।

भूषणः समीपस्थस्य गृहस्य द्वारस्य समीपं गतवान्। जनाः तम् अनुसृतवन्तः।

हरिहरः द्वारस्य पुरतः लड्डुकं संस्थाप्य "अये लड्डुक, प्रविशतु रे" इति उक्तवान्। अनन्तरं यथास्थाने स्थितं लड्डुकं प्रदर्शयन्– "दृष्टं खलु? एतत् अन्तः न गच्छति। अतः द्वारप्रवेशानर्हं लड्डुकम् एतत् एव" इति जनान् उद्दिश्य उक्तवान् च।

जनाः तु– "आम् आम्। हरिहरस्य तर्कः युक्तः एव अस्ति। तेन स्ववचनं पालितम्" इति ससन्तोषम् उक्तवन्तः।

"अये भूषण! यथा उक्तं तथा कृतं मया। अतः ददातु मह्यं दश रूप्यकाणि" इति साग्रहम् उक्तवान् हरिहरः।

अनन्योपायः भूषणः विना विरोधं दश रूप्यकाणि दत्त्वा शिरः अवनमय्य मौनं ततः निर्गतवान्।



# प्रकृतिवैचित्र्याणि–

## शिलारूपं गताः वृक्षाः

अमेरिकादेशे अरिजोनानामके अरण्ये शिलारूपं प्राप्तवन्तः वृक्षाः दृश्यन्ते! कथम् एतत्? द्विशतकोटिवर्षेभ्यः पूर्वं महतः झञ्झावातस्य कारणतः २०० द्वादशाङ्गुलोन्नताः वृक्षाः समूलम् उन्मूलिताः भूमौ पतिताः। तेषाम् उपरि कालान्तरे मृत्तिकायाः सिकतानां च स्तराः निर्मिताः। एते वृक्षाः च शिलातोरणरूपेण परिवृत्ताः। सप्तकोटिवर्षेभ्यः पूर्वम् एतस्याः भूमेः विकासः आरब्धः। तदा एते वृक्षखण्डाः दृष्टिगोचराः जाताः। सिकतामयाः श्वेतशिलाः विभिद्य एते उपरि आगताः।





## एरिबस्पर्वतः

अण्टार्कटिका-दक्षिणभागे सजीवः ज्वालामुखीपर्वतः अस्ति। तस्य नाम 'एरिबस्' इति। एतस्य औन्नत्यं १२,४५० द्वादशाङ्गुलम्। एतस्य मुखस्य वैशाल्यं २,६०० द्वादशाङ्गुलम्।



## लज्जालुसस्यम्

'मिमोसा पुडिका' इति नामान्तरेण युक्तं लज्जालुसस्यम् अतीव कोमलं भवति। स्पर्शमात्रेण एतत् सङ्कोचं प्राप्नोति। पुनः अल्पे एव काले पूर्वतनस्थितिं प्राप्नोति च।

# अद्य चौर्यं प्रवृत्तम्

| | | |
|---|---|---|
| पत्नी - | आर्य, अद्य किं प्रवृत्तम् इति जानाति वा? | I say, you know what happened today? |
| पतिः - | किं प्रवृत्तम्? | What happened? |
| पत्नी - | अद्य मम धनस्यूतस्य चौर्यम् अभवत्। | My purse was stolen. |
| पतिः - | कथं तत्? | How was it? |
| पत्नी - | धनस्यूतः मम स्कन्धस्यूते आसीत्। नगरयाने चिटिकाक्रयणार्थम् अहं धनस्यूतं स्वीकृतवती आसम्। यानात् अवतीर्य विपण्यां स्यूते पश्यामि, धनस्यूतः नास्ति! | It was in my shoulder bag. I took it out in the bus for buying the ticket. Later when I got down and went to the shop I found the purse missing. |
| पतिः - | प्रायः नगरयाने एव चोरितं स्यात्। | The theft must have taken place in the bus! |
| पत्नी - | अहम् अपि तथैव भावयामि। याने महान् सम्मर्दः अपि आसीत्। | I also think so. The bus was fully packed. |
| पतिः - | धनस्यूते कति रूप्यकाणि आसन्? | How much money was there? |
| पत्नी - | प्रायः सप्ततिः रूप्यकाणि आसन्। | Seventy rupees or so. |
| पतिः - | अन्यत् किमपि आसीत् वा? | Was there anything else? |
| पत्नी - | आम्, रजतमयं मम नूपुरद्वयम् अपि आसीत् तत्र। | My two silver anklets were also there. |
| पतिः - | नूतनं खलु आसीत् तत्? | Were they new ones? |
| पत्नी - | आं भोः, यद्यपि नूतनं तथापि धरणसमये शिथिलता अनुभूयते स्म। अतः समीकारणीयम् इति स्यूते स्थापितवती आसम्। न जाने, अद्य प्रातः कीदृशे मुहूर्ते अहम् उत्थितवती इति। सर्वं नष्टम्। | Yes, they were new, but a little big in size. I was taking them to the goldsmith for getting them adjusted. I do not know when I woke up this morning, it has been a total loss all the while. |

# चित्रशीर्षिका-स्पर्धा * पारितोषिकं ५०/- रूप्यकाणि

विजितां शीर्षिकां नवम्बर्-९० मासे प्रकटयिष्यामः।





*उपरितनं चित्रद्वयं पश्यन्तु। *युक्तां शीर्षिकां परस्पर-सम्बन्धि-वाक्यद्वयेन लिखित्वा सप्टम्बर्-२० दिनाङ्कतः पूर्वम् एव प्रेषयन्तु। *अनन्तरम् आगताः शीर्षिकाः न परिशीलयिष्यामः। *स्पर्धायां विजेता ५०/- रूप्यकात्मकं पारितोषिकं प्राप्स्यति। *शीर्षिकाः समपत्रे (पोस्ट्-कार्ड्) लेखनीयाः। तत्र अन्यः विषयः न लेखनीयः। *अधोनिर्दिष्ट-सङ्केताय शीर्षिकाः प्रेषणीयाः–

**चन्दमामा (संस्कृतम्)**

**७३/२, 'अक्षरम्' रङ्गरावुमार्गः, शङ्करपुरम्, बेङ्गलूरु-५६०००४**

---

## 'जुलै'मासस्य चित्रशीर्षिकास्पर्धायाः परिणामः–

प्रथमचित्रम् - **श्रमकरं नैतत् कुशलस्य कुम्भकारस्य।**

द्वितीयचित्रम् - **अविषयश्चायं बालानां सामर्थ्यस्य।**

प्रेषकः - श्री एम्. दीक्षितुलु, के.वि.टि. इन्स्टिट्यूट्, अल्लवरम्-५३३२१७ (आ.प्र.)




Printed by B.V. REDDI at Prasad Process Private Ltd., 188 N.S.K. Salai, Madras 600 026 (India) and Published by B. VISHWANATHA REDDI on behalf of CHANDAMAMA PUBLICATIONS, Chandamama Buildings, Vadapalani, Madras 600 026 (India). Controlling Editor: NAGI REDDI.


---

# कठिनशब्दानां सान्दर्भिकाः अर्थाः

अपनीय - Having removed
अभिव्याप्य - Having pervaded
अमुकः - A particular person
अवाच्यः - Indecent to be uttered
आन्दोलिका - Swing
उद्युक्तः - Started
उपेक्षा - Neglect
उर्वारुकम् - Cucumber
औद्धत्यम् - Arrogance
कङ्कणम् - Bracelet
कटु - Hot (taste)
कटुभाषिता - Speak harshly
कर्णेजपः - Informer
कवलः - Morsel
कुठारः - Axe
गुडः - Jaggery
चतुरङ्गम् - Game of chess
चम्पकम् - Champak flower
छुरिका - Knife
निवापाञ्जलिः - Oblations offered to ancestors

परस्परावगतिः - Mutual understanding
परिचर्या - Service
पृष्ठभूमिः - Background
बडिशम् - Bait
भित्तिभेदनम् - Burglary
मातृष्वसा - Mother's sister
मार्जारः - Cat
मूषकः - Rat
यथावत् - As it is
यापितः - Spent
राङ्कवम् - Shawl
रुष्टः - Angered
लज्जालुसस्यम् - Touch-me-not plant
लड्डुकः - Laddu
विशदतया - In detail
सद्भावः - Existence
साकूतम् - Meaningful (glance)
हनुः - Cheek

* * * * *




**NOW** with the added fun of SPUTNIK Junior!




Selections from Sputnik Junior!.

* Colourfully illustrated stories and cartoons.
* Superb science fiction
* Entertainment and general knowledge

64 packed pages!
At just Rs. 5/-




To subscribe write to,
JUNIOR QUEST,
Dolton Agencies,
Chandamama Buildings,
N.S.K. Salai, Vadapalani,
Madras: 600 026.



A Chandamama
Vijaya Combines
publication